# हास्यं सुध्युपास्यम्

( हिन्दी-पद्यानुवाद-सहितम् )

लेखक
डॉ० प्रशस्यमित्र शास्त्री
( *साहित्य-अकादमी-सम्मान प्राप्त*)
पूर्व अध्यक्ष, संस्कृत-विभाग
फीरोज गाँधी स्नातकोत्तर कॉलेज
रायबरेली-(उ०प्र०)

अक्षयवट प्रकाशन
तेजस्विनावधीतमस्तु

**अक्षयवट प्रकाशन**
**इलाहाबाद**

ISBN 978-93-80634-07-4

हास्यं सुध्युपास्यम्

लेखक :
डॉ० प्रशस्यमित्र शास्त्री


प्रथम संस्करण : २०१३

मूल्य : तीन सौ रुपये

प्रकाशक :
अक्षयवट प्रकाशन
२६, बलरामपुर हाउस
इलाहाबाद-२११००२

मुद्रक :
दूबे प्रिन्टर्स एण्ड ग्राफिक्स
५० A, बलरामपुर हाउस
इलाहाबाद-२११००२

# नान्दीवाक्

रचनात्रयानन्तरं डॉ॰ प्रशस्यमित्रशास्त्र्युपज्ञमभिनवं हास्यकाव्यसङ्कलनं हास्यं सुध्युपास्यमित्याख्यं प्रकाश्यते। तदर्थं कविरयं समेषां काव्यरसिकानां साधुवादं जयजीववचनमभिनन्दनं वर्धापनञ्चार्हति। विविधसङ्कटप्रत्यवायसङ्कुले हि जीवने प्रायेणेदानीं सर्व एव रसाः सङ्कीर्णाः प्रतीयन्ते। परन्तु हास्यरस एव संलक्ष्यते सर्वथा निरातङ्कः। वेदनाग्रस्तोऽपि मानवः कदाचिदवसरमवाप्य हसत्येव। यदि हासार्थं समुचितकारणं नोऽवाप्यते तदापि स हसत्येव। आत्मानमुपहसति। आत्मवैवश्यं हसति। आत्माकिञ्चित्करत्वमुपहसति। आत्मोपहासे ननु कस्यावमानः? कस्य मानभङ्गः? कस्य वाऽनुज्ञाया अपेक्षा?

रसराजं मन्यन्ते शृङ्गारं विपश्चित्तल्लजाः। शृङ्गारमेव रसनाद्रसमामनाम इति मालवेश्वरो भोजदेवोऽपि। एवमेव भवभूतिः करुणं, नारायणः अद्भुतं केचिदन्ये वीरमेव सर्वरसमूलं स्वीकुर्वन्ति। परन्तु कथमेते सर्वे रसाः जटिलसंविधानकाः रसमूलतामापादयितुं शक्यन्ते? शृङ्गारे तावत् सम्भोगविप्रलम्भस्थितिनिर्णयकष्टम्। करुणेऽपि मरणाऽमरणसमस्या। वीरेऽपि धर्मदयादानपाण्डित्यादिपराक्रमप्रदर्शनसमस्या। न कोऽपि रसो निसर्गादेव रसमूलं प्रतीयते। परन्तु हास्यसंविधानके न काऽपि बाधा, न वा कोऽप्युपाधिः। सर्व एव हसितुमिच्छन्ति। सकारणं तु हसन्त्येव। अकारणमपि हसितुं सन्नद्धाः परिलक्ष्यन्ते। अन्यान् हसतस्समुपवीक्ष्यापि हसन्ति जनाः। एवं हि, हासः प्रतीयते मानवानां स्वाभाविकी प्रवृत्तिः, मौलिकी सञ्चेतना वा। कथमेवम्? तत्र विद्यते कश्चिद्धेतुः। वस्तुतः हास्यरसे प्रभवति सत्त्वाधिक्यम्। सत्त्वाधिक्यवशादेव जनोऽकारणं हसति। ममाऽनया व्याख्यया सम्भवति हास्यरसस्यैव सर्वरसमूलकता। तत्र विपश्चिदपश्चिमाः समीक्षका एव प्रमाणम्।

प्राचीनसंस्कृतवाङ्मये हास्यरसावतरणं वेदमन्त्रेष्वेव परिलक्ष्यते। ऋग्वेदस्थे द्यूतकरसूक्ते मण्डूकसूक्ते च हासः सहजरीत्या सन्दृब्धः परिलक्ष्यते। पादकन्दुक इवोभयतोऽप्याहतो द्यूतकर आत्मनो व्यथां प्रकाशयन् कथयति–जाया मां विद्वेष्टि। श्वश्रूश्चापरुणद्धि। विक्रयोन्मुखो वृद्धोऽश्व इवाऽहं सर्वथा निरुपयोगोऽस्मि सञ्जातः। इदमात्मकथनमेव सहजहास्यं जनयति। मण्डूकसूक्तेऽपि प्रावृषि विविधलीलाः जनयतां भेकानां व्यवहाराः शुद्ध–हास्यं जनयन्ति।

परवर्तिनि वाङ्मयेऽपि हास्यं यथावसरं प्रयुक्तं दृश्यत एव। कुमारसम्भवस्थे शिवपार्वतीविवाहसन्दर्भे शिववेषमभिलक्ष्य कथ्यते–महाजनः स्मेरमुखो भविष्यतीति। अर्थात् अखिलब्रह्माण्डसौन्दर्यमतिशयानायाः पर्वतराजनन्दिन्या उमायाः लावण्यमवेक्ष्य तां परिणेतुकामं दिगम्बरं नागभूषणं मुण्डमाल्यावतन्सं शम्भुञ्च पश्यन् को न स्मेर–मुखो भविष्यति? अत्र वरवध्वोः रूपसौन्दर्यवेषभूषावैषम्यमेव हास्यकारणमिति विशेषः।

संस्कृतनाटकेषु पुनः हास्यरसोऽयं नाट्यशास्त्रसिद्धान्तानुकूलमेव प्रतिपादितस्तिष्ठति। तत्र विकृतवेषभाषाव्यवहारादिकर्तृकं यद्धास्यं नाट्यशास्त्रकर्त्रा

प्रतिपादितं तस्यैव यथावदनुपालनं परिलक्ष्यते। विकृताङ्गकृतं हास्यं यथाऽभिज्ञान-शाकुन्तलस्य द्वितीयेऽङ्के-यदा विदूषको माढव्य आत्मानं अङ्गभङ्गविकलमिव प्रदर्शयति दुष्यन्तम्। विकृतवचनकृतं हास्यं यथा विदूषकस्य वसन्तसेनासेवकस्य च वार्तालापे।

कथासाहित्ये तु हास्यरसस्य काप्यमन्दमन्दाकिन्येव प्रवहन्त्यवलोक्यते। भरटकद्वात्रिंशिकायां भरटक (शैवसाधु) सम्बद्धाः प्रायेण सर्वाः कथा हास्यप्रकृतय एव वर्तन्ते। पञ्चतन्त्रहितोपदेशादावपि काश्चन कथा हास्यमवतारयन्ति। सुभाषितपद्येषु हास्यरसस्य सन्दर्भाः पदे-पदेऽवलोक्यन्ते।

स्वातन्त्र्योत्तरसंस्कृतरचनाधर्मितायां हास्यरसस्यैव प्रागल्भ्यं परिलक्ष्यते। इदं हास्यं प्रायेण द्विधारं दृश्यते-पद्याश्रयम् एकाङ्काश्रयञ्च। जनजीवने सम्प्रति प्रायेण समस्याविकले नीरसे च जाते, प्रायेण पाठका हास्यपक्षधराः सञ्जाताः अतएव साम्प्रतिका नाट्यकाराः पद्यकाराश्चापि पाठकाभिरुचिं समाद्रियमाणास्तदिच्छां पूरयन्ति तादृशाभिः रचनाभिः यथाऽभिराजराजेन्द्रस्य मम कोणनाट्यानि (नुक्कड़नाटकेति हिन्द्याम्) हास्यनाट्यानि वा रूपकविधया हास्यं वितन्वन्ति तथैव साहित्याकादमीपुरस्कृतानां श्रीमत्प्रशस्यमित्रशास्त्रिणां पद्यबन्धाश्चापि पद्यविधया स्वस्थहास्यं जनयन्ति।

वस्तुतो हास्यरसक्षेत्रे महीयते प्रशस्यमित्रः मूर्द्धाभिषिक्तस्सन्निति मदनुशंसा। चमत्कारैः वाक्कौशलैः शब्दच्छलैरर्थच्छलैश्च मेदुरं प्रशस्यमित्रकाव्यं वस्तुतो-ऽकृतकं सात्त्विकञ्च हास्यं जनयति। पारम्परिकसत्यनारायणकथयाऽप्यसौ रुचिकरं हास्यं जनयति प्रकरणवक्तृतया। क्वचित्पुनः निशितप्रतिभायाः साह्यमपि सन्दृश्यते।

हास्यं सुध्युपास्यमिति यदुक्तं कविना तदवितथमेव प्रतिभाति। यतो हि एतानि हास्यकाव्यानि सुधीभिरेवोपास्यानि, न खलु वैधेयैः।

एभिरेव मितवचनैरहं ग्रन्थस्य ग्रन्थकारस्य च भूयोभूयोऽभिनन्दनं विदधे। सप्रश्रयम्।

काव्यं प्रशस्यमित्रस्य प्रशस्यं साहितीगुणैः।
प्रशस्या प्रतिभा तस्य चमत्कारमुपेयुषी।।

चैत्र शुक्लपक्ष नवरात्रम् — मिश्रोऽभिराजराजेन्द्रः
११ अप्रैल, २०१३ — शिमला-( हिमाचल प्रदेश )

# किञ्चित् प्रास्ताविकम्

संस्कृतभाषायां हास्य-व्यंग्यकाव्यानि प्रायः अल्पीयांस्येव लभ्यन्ते। प्राचीनेषु विभिन्नेषु नाटकेषु सट्टकेषु विदूषकवाक्येषु संवादेषु वा यद्यपि लभ्यन्ते हास्यवचनानि पुनरपि अन्यरसाऽपेक्षया एतस्य सद्भावः अल्पीयान् एव। क्वचित् प्रश्नोत्तररूपाः प्राचीनाः व्यंग्यपूर्णाः संवादाः प्राप्यन्ते स्फुटपद्येषु पुनरपि नवविषयान् अवलम्ब्य यथा अन्यभारतीयभाषाणां साहित्ये हास्य-व्यंग्यानाम् उपस्थितिः प्रवर्त्तते सामयिक-पत्र-पत्रिकासु पुस्तकेषु वा दृश्यते तथा संस्कृतभाषायां न परिलभ्यते इति सत्यं तु स्वीकरणीयम् एव।

एतत्सर्वं विचार्य एव मया हास्यं व्यंग्यं च उपलक्ष्य पद्यकाव्यानि विरचितुं प्रारब्धानि। परिणामतः कोमलकण्टकावलिः, व्यंग्यार्थ-कामुदी हासविलासश्चेति मम त्रीणि पुस्तकानि प्रकाशनपथे समायातानि। तत्र द्वयोः पुस्तकयोः प्रकाशनं हिन्दीपद्यानुवादसहितम् आसीत् येन अल्पसंस्कृतज्ञानाम् असंस्कृतज्ञानां कृतेऽपि तत् लाभप्रदं विनोददायकं च बभूव।

इयम् अस्माकं तृतीया रचना हिन्दी-पद्यानुवाद-सहिता प्रकाश्यते। पूर्वप्रकाशितस्य रचनाद्वयस्य हिन्दी-पद्यानुवादः श्रीरमापतिमिश्रेण कृत आसीत्। पूर्वम् एतस्या रचनाया अपि अनुवादः तेनैव कर्त्तव्य आसीत् परन्तु अस्वस्थता-वशात् यदा तेन न सम्पादितं तदा त्वहं स्वयमेव पद्यानुवादकार्ये सम्प्रवृत्तः। यद्यपि पद्यानुवादकार्यं सर्वथा मनोरथानुसारं न प्रतीयते पुनरपि मन्ये पर्याप्तं सन्तोषप्रदम् उपयोगि च भविष्यति।

विगतेषु वर्षेषु विभिन्नविश्वविद्यालयानां एम्०फिल्० उपाधिम् अथवा शोधकार्यं विधाय पी-एच्०डी० उपाधिं प्राप्तुकामाः छात्राः प्रायः नवसंस्कृतरचनाः समाश्रित्य शोधकार्ये प्रयासरताः प्राप्यन्ते। तत्र तेषां कृते यदि कस्यचित् पुस्तकस्य हिन्दी-अनुवादः समुपलभ्यते तदा ते तत्र सुखमनुभवन्ति पुस्तकं च समधीत्य रसास्वादमपि कुर्वन्ति। तस्मादेव मया तृतीयस्याऽस्य पुस्तकस्य हिन्दी-पद्यानुवादः प्रस्तुतीक्रियते।

राष्ट्रस्य समाजस्य परिवारस्य च साम्प्रतिकीं दुरवस्थां विलोक्य तत्सर्वं सहजतया मनोविनोदपूर्वकम् प्रस्तोतुं मम प्रयासः कियान् सफल इत तत्र तु विद्वांस एव प्रमाणम्। एतस्य प्रकाशनात् पूर्वम् अस्माकं विचारः पूर्वप्रारब्धस्य 'अम्बेडकराभ्युदयम्' इति महाकाव्यस्य प्रकाशन-विचार आसीत् परन्तु तस्य पूरणे विलम्बत्वात् तथा च विभिन्नासु पत्र-पत्रिकासु प्रकाशितानां मम हास्य-व्यंग्य-पद्यानाम् अथ च विभिन्नसंस्कृतकविसम्मेलनेषु पठितानाम् अनेकासां कवितानां

सङ्ग्रहो यथा सुरक्षितो भवेत् अतस्तदेव प्रथमं प्रकाशनीयम् इति मत्वा "हास्यं सुध्युपास्यम्" इति नाम्ना काव्य-सङ्कलनमेतत् विपश्चितां पुरतः प्रस्तूयते।

पुस्तकेऽस्मिन् हास्यमाध्यमेन व्यंग्यमाध्यमेन च समाजव्यवस्थायाः शासनव्यवस्थाया वा स्वरूपं प्रबलतया प्रस्तुतिकर्त्तुं प्रयासः कृतः। तद्यथा पुस्तकस्य अभिनवोपसंहार-प्रकरणे अभिनवसत्यनारायणव्रतकथामाहात्म्यमाध्यमेन शासन-समाजगत-भ्रष्टाचारस्य समुपस्थानम् अभिमतम्। तथैव यदा खाद्यवस्तूनां मूल्ये सहसा महाब्रृद्धिरभवत् सामान्यजनता च पीडिता बभूव पलाण्डूनां मूल्यं प्रतिकिलो पञ्चसप्ततिः रूप्याणि द्विदलानां मूल्यं च विंशत्यधिकम् एक शतं रूप्यकाणि जातानि तदानीमेव-शाकापणानां मध्ये चिकित्सकापणस्य रहस्यम्-इति रचना प्रादुर्भूता। तथैव पुस्तके प्रदत्तानि विविधानि मंगलाचरणानि समधीत्य वर्त्तमानराजनैतिकव्यवस्थायाः समस्यानां चाऽपि परिचयः शक्यते प्राप्तुम्।

मन्ये विद्वांसः संस्कृतप्रेमिणश्च संस्कृतभाषायाः प्रचाराय प्रसाराय च कृतस्य मम एतत्प्रयासस्य पूर्ववत् स्वागतं विधाय मम समुत्साहं वर्धयिष्यन्ते।

सुहास्यपूर्णे सामयिके होलिकावसरे पुस्तकस्याऽस्य प्रकाशने अतिसंक्षिप्त-समयेनैव अक्षयवट-प्रकाशन संस्थायाः प्रबन्धकाधिकारिणा श्री सत्यव्रतमिश्रेण यः सहयोगः सम्पादितस्तदर्थमहं तस्मै भूरिशो धन्यवादं विज्ञापयामि।

**होलिकोत्सवः** — **प्रशस्यमित्र शास्त्री**

**२७ मार्च, २०१३** — **बी-२९, आनन्द नगर, रायबरेली-(उ०प्र०)**

# अनुवाद की पृष्ठभूमि

संस्कृत-भाषा में आधुनिक सामाजिक समस्याओं को ध्यान में रखकर तथा पारिवारिक एवं सामाजिक संवादों या विवादों को लक्ष्य में रखकर हास्य-व्यंग्यविधा में कम ही लिखा गया है। प्रायः लोग कहा करते हैं कि संस्कृत के कवि अपनी कविता का विषय आज भी परम्परागत चिन्तन को ही बनाते हैं तथा कवि-सम्मेलनों में भी वही देवी-देवता-स्तुति, गंगा-हिमालय, भारतवर्णन या कवि-महाकवि-काव्य-महाकाव्य का वर्णन या प्रशंसा आदि ही प्रस्तुत करते हैं। सामाजिक, राजनैतिक या सामयिक समस्याओं के प्रति वे उदासीन हैं। परन्तु सहृदय पाठकों को इस पुस्तक को पढ़कर ऐसा कुछ प्रतीत नहीं होगा तथा उनके इस प्रकार के पूर्वोक्त आक्षेपों से मुक्ति भी मिल जाएगी। इन कविताओं के अनेक अंशों का पाठ कवि-सम्मेलनों में ही किया गया है।

विषय की दृष्टि से पुस्तक का मंगलाचरण जहाँ राष्ट्र की सामयिक समस्याओं के प्रति ध्यान आकृष्ट करता है वहीं 'अभिनवोपसंहार-प्रकरणम्' की दो कविताएँ- 'शाकापणानां मध्ये चिकित्सकापणस्य रहस्यम्' उस चरम मँहगाई को लक्षित करके लिखी गई है जब देश में आलू-प्याज का भाव सत्तर रुपये किलो हो जाता है तथा दालें एक सौ पचास रुपये किलो बिकने लगती हैं।

इसी प्रकार 'अभिनवसत्यनारायणव्रतकथा-माहात्म्यम्' में आज की भ्रष्टाचार-जन्य व्यवस्था पर भी प्रहार किया गया है। ये सब विषय पुस्तक में व्यंग्य के माध्यम से एक नये अन्दाज में प्रस्तुत किये गये हैं।

इस पुस्तक से पूर्व मेरी दो पुस्तकों-'कोमलकण्टकावलिः' तथा 'व्यंग्यार्थ-कौमुदी' का हिन्दी पद्यानुवाद सहित प्रकाशन हो चुका है। यद्यपि इन पुस्तकों की भाषा अत्यन्त सरल है पुनरपि संस्कृत-भाषा में अल्पज्ञ या बिलकुल ही न जानने वालों के लिए हिन्दी-अनुवाद अत्यन्त उपयोगी प्रतीत होता है। इसी कारण जब "हास्यं सुध्युपास्यम्" पुस्तक प्रकाशन का विचार किया गया तो हिन्दी-पद्यानुवाद भी देना उचित प्रतीत हुआ।

पूर्व उद्धृत दोनों पुस्तकों का हिन्दी-अनुवाद हमारे कविमित्र श्री रमापति मिश्र (चित्रकूट) ने किया था। इस बार अस्वस्थतावश असमर्थ होने के कारण इसका पद्यानुवाद हमें ही करना पड़ा। इसी कारण पुस्तक के प्रकाशन में कुछ विलम्ब भी हुआ क्योंकि अक्षयवट प्रकाशन के प्रबन्धक श्री सत्यव्रत जी मिश्र का यह आग्रह था कि इस पुस्तक का प्रकाशन भी हिन्दी-अनुवाद सहित ही हो।

भारतवर्ष के अनेक विश्वविद्यालयों में जो छात्र एम०फिल० या पी-एच०डी० की उपाधि के लिए संस्कृत की नई रचनाओं को अपना विषय बना रहे हैं वहाँ उन्हें हिन्दी-अनुवाद मिलने से अत्यन्त सुगमता होती है एवं कार्य करने में प्रोत्साहन मिलता है। इसी कारण से पूर्व दोनों पुस्तकों का प्रथम संस्करण समाप्त हो जाना हमारे लिए प्रसन्नता का विषय है।

मेरे ज्येष्ठ भ्रातासमान तथा संस्कृत-साहित्य के अर्वाचीन लेखकों में मूर्धन्य सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय के पूर्व कुलपति अभिराज डॉ० राजेन्द्र जी मिश्र ने अल्प समय की सूचना पर ही इस पुस्तक की भूमिका को लिखना सहर्ष स्वीकार किया। उसके लिए हम उनके प्रति कृतज्ञता व्यक्त करते हैं। वस्तुतः काव्य लेखन के क्षेत्र में वे ही मेरे लिए आदर्श एवं सहृदय कवि होने के कारण प्रेरक भी हैं। अनेकों बार विभिन्न मञ्चों पर उनके साथ काव्यपाठ करते समय उनकी सहजता एवं विद्वत्ता तथा मादृश अनुज जनों के प्रति प्रेरणा एवं प्रोत्साहन प्रदान करने का भाव ही लेखन क्षेत्र में भी बहुधा प्रभावित करता है। इसे पद्यानुवाद सहित प्रकाशित करने का सुझाव भी उन्हीं का था जिसे हमने उचित एवं उपयोगी मानकर तत्क्षण स्वीकार किया।

अनुवाद करते समय मुझे स्वयं भी प्रतीत हुआ कि कहीं-कहीं इससे भी अच्छा अनुवाद किया जा सकता था। परन्तु प्रकाशन की शीघ्रता एवं अन्य कई कारणों से भी इस कार्य में अपेक्षित समय न दिया जा सका।

फिर भी मुझे विश्वास है कि पाठकों को यह स्वीकार्य होगा तथा अनुवाद से उन्हें पूर्ण सन्तुष्टि भी मिलेगी जिससे कि सामान्य पाठक भी लाभान्वित हो सकेंगे।

**होलिकोत्सव** | **प्रशस्यमित्र शास्त्री**

**२७ मार्च, २०१३** | **बी-२९, आनन्द नगर, रायबरेली-(उ०प्र०)**

●

# विषयानुक्रमः

न सा सभा यत्र न काव्यपाठः,
काव्यं च किं? व्यंग्यमयं न यत् स्यात्।
न तद् व्यंग्यं यत्र न चाऽस्ति हास्यम्,
हास्यं च किं तत्? न हि यत् 'प्रशस्यम्'।।

प्रातस्तु नित्यम् 'उषसा' सह यस्तु दृष्टः,
मध्याह्नमेति सततं सह 'रश्मिना' च।
सायं प्रयाति सममेव च 'सन्ध्यया' यः,
'मित्र'स्तथाऽपि भुवि सर्वजनैः 'प्रशस्यः'।।

नानाकष्टैः प्रपूर्णे जगति बहुतरं वीक्ष्य दुःखं नवीनम्,
तत्सर्वं रोद्धुकामो मनसि च सततं सौख्यम् आस्थातुकामः।
हृद्यं सद्योऽनवद्यं सरलपदयुतं व्यंग्यपूर्णं प्रशस्यः,
काव्यं प्रस्तौति नव्यं बुधसदसि भृशं "सुध्युपास्यं सुहास्यम्"।।

# विटपस्थकालिदासेभ्यो नमः

भाषा-विवादम् अतिवर्ध्य च जातिवादम्,
ये प्रान्तवाद-लघु-शंकुलया महान्तम्।
छिन्नं विधातुमिह राष्ट्रतरुं सचेष्टाः,
तान् आनतोऽस्मि विटपस्थित-कालिदासान्।।

कश्मीर-पण्डित-जनान् न हि चिन्तयन्ते,
लेहस्थ-बौद्ध-जनतां न विचारयन्ते।
किं चाऽल्पसंख्यक-पदेन न ते गृहीताः,
पृच्छामि तांस्तु विटप-स्थित-कालिदासान्।।

दायित्व-बोध-विरतान् निजलाभ-लग्नान्,
विस्मृत्य राष्ट्रहितम् आत्म-दलेषु मग्नान्।
कालाऽर्थ-सञ्चयपरान् नव-नेतृ-रूपान्,
तान् आनतोऽस्मि विटप-स्थित-कालिदासान्।।

येषां कृते तु परिवार-जनस्य चिन्ता,
स्याद् राजनीति-गगने 'लघुवंश'-कृत्यम्।
निर्वाचनेषु विहरन्ति च 'मेघदूते',
तान् आनतोऽस्मि विटप-स्थित-कालिदासान्।।

वाग्देवता - सदयता - ऽधिगताऽवबोधम्,
सत्यकाव्य-नाटक-सुगीतिकृतम् मनोज्ञम्।
विद्योत्तमाऽऽवृत-कपाटम् अपाटयन्तम्,
वन्दे महाकविवरं भुवि कालिदासम्।।

•

# विटपस्थ कालिदासों को नमन

जो प्रान्त जाति भाषादि-विवाद रूपी,
ले के कुठार तरु को यदि राष्ट्र-रूपी।
हैं दीखते यदि समुद्यत काटने को,
ये कालिदास विटपस्थ इन्हें नमस्ते।।

कश्मीर-पण्डित उपेक्षित हैं सदा ही,
हैं लेह में अब उपेक्षित बौद्ध भिक्षु।
क्या अल्पसंख्यक न ये जनता यहाँ की,
मैं पूछता विटप-संस्थित कालिदासों!।।

दायित्व-बोध जिनका कुछ भी नहीं है,
जो भूल राष्ट्रहित केवल स्वार्थ साधें।
नेता सभी निरत वित्त बटोरने में,
ये कालिदास विटपस्थ इन्हें नमस्ते।।

है राजनीति जिनकी 'लघु-वंश' वादी,
ये राष्ट्र के क्षितिज में कब अस्त होंगे?
हैं 'मेघ-दूत' बनते जिनकी सवारी,
ये कालिदास विटपस्थ इन्हें नमस्ते।।

वाग्देवता शुभकृपा वर तुल्य पाके,
जो गद्य पद्य रच के यश खूब पाया।
विद्योतमा-कृत अनावृत द्वार देखा,
हे कालिदास! कविराज! तुम्हें नमस्ते।।

●

# गणतन्त्रपतीन् नमामि

येषां निमेषनियतेन महार्घतायाम्,
स्यात् प्रोन्नतिश्च सहसाऽवनतिर्भवेद् वा।
त्यक्त्वा त्वहं गणपतिं भगवन्तम् अद्य,
तान् वै नमामि गणतन्त्रपतीन् स्वदेशे।।

येषां वरेण्य - गणतन्त्र - सुरक्षकाणाम्,
भ्रू - भङ्गिभिः परिचितास्त्वपराधिनस्ते।
शान्ता भवन्ति सहसा त्वथवा सचेष्टाः,
तान् वै नमामि गणतन्त्रपतीन् स्वदेशे।।

कृष्णं धनं गणयितुं बहु तत्परा ये,
निर्वाचनेषु निरता गणिते मतानाम्।
सिद्धाश्च जातिगणनासु विलक्षणासु,
तान् वै नमामि गणतन्त्रपतीन् स्वदेशे।।

मूर्खं सदा जनगणं बहुमन्यमानाः,
स्वार्थे सदैव निरता जनतामुपेक्ष्य।
संसत्सु चाऽपि गणयन्ति निजं सुखं ये,
तान् वै नमामि गणतन्त्रपतीन् स्वदेशे।।

श्रीकृष्णमेव भुवि पूजयसे कथम् भो?
कृष्णं धनं यदि ददाति तवाऽत्र सिद्धिम्।
कृष्णं विहाय भुवि कृष्ण-धने यतस्व,
"यत्ने कृते यदि न सिध्यति कोऽत्र दोषः"?।।

•

# देश के गणतन्त्र रक्षकों को प्रणाम

जिनके एक इशारे से ऊपर या नीचे होता है,
मँहगाई का ग्राफ निरन्तर चढ़ता और उतरता है।
गणपति को तजकर इनको ही सदा नमन हम करते हैं,
भारत के गणतन्त्र मालिकों का अभिनन्दन करते हैं।।

इनकी भृकुटी के छोटे से देखा एक इशारे से,
भली भाँति हम जान रहे हैं परिचित अपराधी सारे।
चुप रहते या कुछ भी करने को तत्पर हो जाते हैं,
इसीलिए श्रद्धा से इनको सदा नमन हम करते हैं।।

काला धन गिनने को बैठे सदा देश में ये तत्पर,
निवार्चन में भी वोटों की गणना का आँके अन्तर।
सभी जातियों के वोटों की गणनाएँ जो रखते हैं,
इन गणतन्त्र मालिकों का ही सदा नमन हम करते हैं।।

जन-गण को ये महामूर्ख ही मन ही मन जो मान रहे,
उन्हें उपेक्षित कर अपना ही स्वार्थ सदा पहचान रहे।
संसद में भी अपनी ही सुविधाओं की गिनती करते,
इन गणतन्त्र मालिकों को अब नित्य नमन हैं हम करते।।

भारत में भगवान कृष्ण को पूज रहे बेकार यहाँ,
काले धन से सिद्ध हो रहा काम सभी सर्वत्र जहाँ।
छोड़ कृष्ण को कृष्ण-वित्त कैसे बनता है यह सीखो,
बना सको यदि नहीं यहाँ तो दोष कहाँ कैसे? देखो।।

•

# स्वाधीनतादिवसं नमामि

आतङ्कवादिभिरहर्निशमेव नित्यम्,
स्वच्छन्दतस्तु विहितानि च यत्र तत्र।
विस्फोटनानि परिलक्ष्य बमादिकानाम्,
स्वातन्त्र्यमद्य दिवसं विवशो नमामि।।

हत्या-बलात्कृतिपरा अधमा युवानः,
लोके चरन्ति नितरां बहवः स्वतन्त्राः।
तेषां निरीक्ष्य च निरंकुशतां स्वदेशे,
स्वातन्त्र्यमद्य दिवसं विवशो नमामि।।

उत्कोचरूपमिह वित्तमवाप्य साक्षात्,
ये शासकाः किल महाधनिनो बभूवुः।
तेषामहं तु जयघोषमवेक्ष्य देशे,
स्वाधीनतादिनमहं विवशो नमामि।।

नानाऽपराधसहिता अभियुक्तरूपाः,
तिष्ठन्ति संसदि परं यदि माननीयाः।
तेषां निरीक्ष्य चरितं खलु सांसदानाम्,
स्वाधीनतादिनमहं विवशो नमामि।।

निर्वाचनेषु समरेषु यथा-कथञ्चित्,
लब्ध्वा हठाद् विजयमत्र विधायका ये।
स्वैरं यदा च सदनेषु समाचरन्ति,
स्वाधीनतादिनमहं विवशो नमामि।।

अल्पाऽपराध-विषया बहवो निबद्धाः,
कारासु निर्धनजनाः परमद्य नेता।
घोराऽपराधसहितोऽपि यदा स्वतन्त्रः,
तत् किं नमेयमिह पञ्चदशं ह्यगस्तम्?।।

•

# स्वाधीनतादिवस को करता नमस्ते

हैं रोज रोज बम फोड़ रहे सदा ही,
आतङ्कवादरत लोग जहाँ तहाँ ये।
ये देख के विवश हैं हम आज सारे,
स्वाधीनता-दिवस को करते नमस्ते।।

हत्या-बलात्करण में जिनकी प्रवृत्ति,
आजाद हो जगत में यदि घूमते वे।
तो रोज ही लख निरंकुशता इन्हीं की,
हैं आज तो विवश हो करते नमस्ते।।

है घूस का धन मिला जब शासकों को,
वे हो गए अतिधनी लघु काल में ही।
जैसे सुना विजय घोष वहाँ उन्हीं का,
कैसे इसी दिवस को करता नमस्ते?।।

घोरापराध-रत जो अभियुक्त होते,
वे माननीय बनके अब हैं यशस्वी।
निर्लज्ज जो सदन में अब बैठते हैं,
ये देखके विवश हो करता नमस्ते।।

ये जो चुनाव लड़के अब जीतते हैं,
कैसे विधायक बने सब जानते हैं।
स्वच्छन्द आचरण जो करते सभा में,
ये देख आज दिन को करता नमस्ते।।

देखा दरिद्रजन को जब जेल जाते,
थोड़ा किया यदि कभी अपराध तो वे।
घोरापराध कर जो पकड़े न जाते,
तो क्यों करूँ नमन आज स्वतन्त्रता को?।।

•

## मेलितव्यः सदा पाणिः

मन्ये मया सह सदा तव शत्रुता स्यात्,
सम्बन्ध-तन्तुरिह किन्तु न छेदनीयः।
चित्तं मिलेन्न हि मिलेद् अथवा मिथस्ते,
पाणिः परस्परमहो! ननु मेलनीयः।।

•

## हाथ मिलाते रहिए

माना अजी! संग यहाँ कुछ दुश्मनी हो,
सम्बन्ध-सूत्र बिलकुल मत तोड़िए जी।
ये दिल मिले परस्पर अथवा मिले ना,
पर हाथ आपस सदैव मिलाइए जी।।

•

## कदा प्रातर्भविष्यति

यदा स्वतन्त्रता प्राप्ता तदाऽभूद् अर्धरात्रिता।
अहो! आश्चर्यमद्याऽपि प्रातर्वेला तु नाऽऽगता।।

•

## वारणारोहिणः स्वयम्

भ्रष्टाचारमिति ख्यातं वारणं वारणाय ते।
नेतारो नैव शक्ता ये वारणारोहिणः स्वयम्।।

•

## का वै लोकसभा भवेत्?

सम्मेलनेषु यस्यां च गालिदानं विधीयते।
परस्परं सदस्यैः सा ज्ञेया 'ग्राम-सभा' सदा।।

ध्वनिवर्धक-यन्त्राणाम् आसन्दीनां च खण्डितैः।
प्रहारः क्रियते यत्र सा 'विधान-सभा' स्मृता।।

यत्र सर्वे सदा शान्ताः शृण्वन्ति मौनमास्थिताः।
भाषते कश्चिदेकश्च सा तु 'शोकसभा' भवेत्।।

यत्र सर्वेऽपि साक्रोशं वदन्ति विवदन्ति च।
न चैव शृणुते कश्चित् सा तु 'लोकसभा' भवेत्।।

•

## होगा कभी सबेरा?

हुआ देश आजाद तब रहा आधी रात अंधेरा।
अचरज यही अभी तक देखो आया नहीं सबेरा।।

●

## खुद सवार हाथी पर

भ्रष्टाचार महागज देखो बढ़ता जाय निरन्तर।
कौन इसे नेता रोके जो खुद सवार हैं इस पर।।

●

## 'लोकसभा' की परिभाषा

गाली देवें आपस में जिस मीटिंग में आ आकर।
कहलाती वह 'ग्राम-सभा' है निःसन्देह यहाँ पर।।

माइक कुर्सी तोड़ जहाँ पर आपस में हैं लड़ते।
वही 'विधान-सभा' होती है सभी लोग यह कहते।।

जहाँ सभी हो मौन बैठते एक बोलता कोई।
वह तो 'शोक-सभा' ही होगी जान रहे सब कोई।।

जहाँ चीखकर बोल रहे सब ना कोई है सुनता।
भारत की वह 'लोक-सभा' है मान रही यह जनता।।

●

## भारतं नः कथं महान्?

निग्रहणाय चौराणां यन्त्रमाविष्कृतं यदा।
अनेकेषु च देशेषु तद्यन्त्रं स्थापितं तदा।।

एकघण्टाव्यतीते च यन्त्रे संस्थापिते पुनः।
दश चाऽमेरिकादेशे मानवा निग्रहं गताः।।

विंशतिर्मानवास्तावत् चौरकर्म-समुद्यताः।
इंग्लैण्डे निगृहीताश्च तदानीं यन्त्रकारणात्।।

पञ्चाशत् चीनदेशेऽपि चौरकर्मणि व्यापृताः।
यन्त्रस्य कारणादेव पुरुषा निग्रहं गताः।।

परन्तु भारतं वर्षं देशोऽस्ति नः सदा महान्।
एतद्विज्ञातमस्माभिस्तद्यन्त्रे स्थापिते यतः।।

स्थापनाऽनन्तरं तस्य संयन्त्रस्याऽद्भुतस्य च।
घण्टामध्ये तु चौरैस्तद् यन्त्रमेव हि चोरितम्।।

•

## भाषायां न नियन्त्रणम्

अंग्रेजी-भाषकः कश्चिन्नेता श्रोतॄन् उवाच यत्।
कदापि नाऽस्म्यहं हिन्दी-भाषणे निपुणः परम्।।

हिन्द्या तु भाषया सार्धं सम्बन्धो मे तथा मतः।
जीवने भार्यया सार्धं सम्बन्धो वर्त्तते यथा।।

भार्यया तु समं प्रेम महन्मे वर्त्तते परम्।
नियन्त्रणं च तस्यां मे न किञ्चिदपि वर्त्तते।।

तथैव भाषया सार्धं हिन्द्या स्नेहो महान् मम।
परं नियन्त्रणं तस्यां भार्यायाम् इव नास्ति मे।।

•

## भारत महान् कैसे?

चोर पकड़ने हेतु हुआ जब यन्त्र एक आविष्कृत।
और अनेकों देशों में वह यन्त्र हुआ सुस्थापित।।

घंटा अभी एक बीता ज्यों वह मशीन लगने में।
पकड़े गए चोर दस त्यों ही उससे अमरीका में।।

और एक घंटे में ही तब बीस चोर थे पकड़े।
उस मशीन के कारण ही इंग्लैण्डदेश में तगड़े।।

पुनः एक घंटे में ही तब चीन देश ने जाना।
चोर पचास पकड़ में आए उससे ही यह माना।।

पर अपना भारत महान् क्यों हमें समझ में आया।
यन्त्र लगा जब भारत में तो देखी कैसी माया।।

नहीं एक घंटा भी बीता देखा एक अनोखा।
वह मशीन ही पार कर दिया चोरों ने दे धोखा।।

•

## नहीं नियन्त्रण भाषा पर

इंगलिश भाषण में प्रवीण कोई नेता जनता में।
बोला यह मैं नहीं निपुण कुछ भी हिन्दी भाषा में।।

लेकिन हिन्दी से मेरा सम्बन्ध रहा वैसा ही।
जीवन में पत्नी के संग सम्बन्ध बना जैसा ही।।

जैसे पत्नी के संग मेरा प्रेम महान् बना है।
किन्तु नियन्त्रण उसके ऊपर कुछ भी नहीं घना है।।

वैसा ही हिन्दी से मेरा स्नेह खूब रहता है।
किन्तु नियन्त्रण उसके ऊपर कभी नहीं बनता है।।

•

# देशे कथं जयतु पञ्चदशो ह्यगस्तः?

मिथ्या सदैव वचने धनसञ्चयश्च,
आत्मीयमूर्त्तिरचनं परिवार - वादः।
सामान्य - मानव - जने समुपेक्षिता च,
नेतुर्हि पञ्चदशतां कथयत्यगस्तः।।

किम्पाठने च पठने च परिश्रमे च,
ग्रन्थान् विलोक्य ददतामधुना परीक्षाम्।
विद्यालयेषु लयतामुपयाति विद्या,
पञ्चत्वमिङ्गयति पञ्चदशो ह्यगस्तः।।

स्वच्छन्दतस्तु क्रियतामिह मूल्यवृद्धिः,
भ्रष्टेषु कर्मसु तथा सततं समृद्धिः।
प्राप्नोतु कष्टमभितश्च जनः समस्तः,
देशे सदा जयतु पञ्चदशो ह्यगस्तः।।

शाकं तथा द्विदलमत्र तु भोक्तुकामः,
हट्टेषु चाऽऽपणपथेषु गतः क्रयार्थम्।
मूल्यं निशम्य सहसा क्रयणे परास्तः,
देशे सदा जयतु पञ्चदशो ह्यगस्तः।।

दैनन्दिनं प्रथित एष तु जातिवादः,
राष्ट्रे दृढो भवति सम्प्रति प्रान्तवादः।
ऐक्यं विनष्टमथ संघविधिर्निरस्तः,
देशे कथं जयतु पञ्चदशो ह्यगस्तः?।।

आतङ्कवादिभिरियं जनता समस्ता,
सम्पीडिताऽस्ति कथमद्य? यदा च पृष्टः।
नेता वदत्यहह! तत्र विदेशि-हस्तः,
देशे सदा जयतु पञ्चदशो ह्यगस्तः।।

विस्फोटमद्य सहते तु बमादिकानाम्,
देशे निरन्तरमियं जनता निरीहा।
नेताऽद्य राष्ट्रिय-हितेषु परं तटस्थः,
देशे कथं जयतु पञ्चदशो ह्यगस्तः?।।

# विजयी कैसे पन्द्रह अगस्त?

झूठ बोलने में माहिर हैं-पैसा खूब बनाते हैं,
अपनी ही ये मूर्ति लगाते - वंशवाद फैलाते हैं।
शोषित पीड़ित जनता की ये सदा उपेक्षा करते हैं,
नेताओं की पाँच दशाएँ मास अगस्त बताते हैं।।

पढ़ने में क्या कठिन परिश्रम? और पढ़ाने में भी क्या?,
खोल किताब नकल करना है अजी! परीक्षा देनी क्या?।
विद्यालय में तो अब 'विद्या' का ही 'लय' जानो मानो,
यही बात कहता अगस्त है इसे खूब तुम पहचानो।।

मनमरजी से दाम बढ़ाओ कौन यहाँ पर रोकेगा,
भ्रष्टाचार करो जी भर के धनी बनो क्यों टोकेगा?।
लोग सभी हैं दुःख उठाते कष्ट उठाते हैं समस्त,
विजयी होवे विजयी होवे आया है पन्द्रह अगस्त।।

मँहगी सब्जी मँहगी दालें, बोलो क्या हम खाएँगे?,
यहाँ अभी बाजार गए सोचो खरीद क्या लाएँगे?।
लेकिन कीमत सुनी वहाँ जब होश हो गया पूरा पस्त,
आज मनाएँगे हम कैसे? जय बोलो पन्द्रह अगस्त।।

खूब बढ़ रहा जातिवाद है देखो कोने-कोने में,
प्रान्तवाद भी फैल रहा है आज देश को धोने में।
हुई एकता नष्ट यहाँ की संघ भावना का है अस्त,
विजयी कैसे होंगे बोलो ए! प्यारे! पन्द्रह अगस्त?।।

पीड़ित हुई यहाँ की जनता देखो इन हत्यारों से,
जो आतङ्कवाद फैलाते छिपे फिर रहे चोरों से।
कैसे करें नियन्त्रण इस पर जब पूछा नेताओं से,
बोले ये तो हाथ विदेशी रहे नियन्त्रित होने से।।

यह निरीह जनता सहती है बम विस्फोटो की पीड़ा,
रोज रोज की घटनाओं से खून खराबों की क्रीड़ा।
नेता तो घर में हैं बैठे आँख मूँद कर हैं तटस्थ,
कहो यहाँ कब होगे विजयी तुम मेरे पन्द्रह अगस्त?।।

सर्वं विकास-सलिलं मधुरं निपीय,
क्षारं ह्यगस्त्य इव ये प्रददुः प्रजायै।
तेषां विनाशमिह कामयते प्रशस्तः,
देशे सदा जयतु पञ्चदशो ह्यगस्तः।।

•

## राष्ट्रध्वजस्य प्रतीकव्याख्या

आतङ्कवाद-दहनं न हि शान्तमत्र,
देशे निरन्तरमिदं ज्वलनं विवृद्धम्।
आतङ्क-भा-रतमिदं भुवि भारतं नः,
इत्येव बोधयति केसर-वर्ण-वस्त्रम्।।

दैनन्दिनं प्रथितमस्ति महार्घतायाः,
यद् दुष्प्रभुत्वमिह तेन विवर्णयुक्तम्।
श्वेतं भयेन भरितं जनता-मुखं तद्,
संद्योतयत् लसति शुक्लमिदं ध्वजे नः।।

हृष्टाः सुपुष्ट - घन - जंगलवत्प्रसन्नाः,
ते राजनीति-निपुणाः प्रभु-भाव-मग्नाः।
धूर्त्ताः सदैव हरिताः सुखिताश्च देशे,
केतोः हरिद्वसनमत्र विवक्ति भावम्।।

भ्रष्टेषु काचिदपि नैव नियन्त्रणा ते,
स्वातन्त्र्य-पूर्वकमहो! विचरन्तु देशे।
अव्याहता गतिरियं किल भ्रष्टतायाः,
इत्येव बोधयति चक्रमिदं ध्वजे नः।।

•

पी विकास का मीठा जल जो खारा स्वयं निकाल रहे,
मुनि अगस्त्य की याद दिलाते जनता को कंगाल किये।
सर्वनाश हम चाहें उनका निश्चित होगा मार्ग प्रशस्त,
सदा अन्त में विजय करोगे ए! मेरे पन्द्रह अगस्त!।।

●

## राष्ट्रध्वज की प्रतीकात्मक व्याख्या

आतंक की लपट तो बुझती नहीं है,
है देश में बढ़ रही अब भी सदा ही।
ये रंग केसर लगा अपनी ध्वजा में,
आतंक लक्षित करे अब राष्ट्र में है।।

है रोज रोज बढ़ती मँहगाइयों के,
दुश्चक्र से व्यथित हो भय से सफेदी।
छायी समस्त जन के मुखमण्डलों पे,
ये श्वेत वस्त्र अब है ध्वज का बताता।।

है राजनीति जिनकी यह जिन्दगी ही,
वे धूर्त्त हर्षित हुए बहुधा प्रमोदी।
आनन्दयुक्त शठ लोग हरे भरे हैं,
दर्शा रहा हरित रंग यही ध्वजा में।।

जो भ्रष्ट दुष्ट जन वे विचरें सदा ही,
होगा नियन्त्रण नहीं उनपे यहाँ तो।
ये भ्रष्टता बहुत ही गतिशील जानो,
है व्यक्त चक्र करता इस भाव को ही।।

●

# शारद एष चन्द्रः

आद्यो महाकविरसौ भुवने प्रसिद्धः,
काव्येन नायकतमं परिकीर्त्य रामम्।
विस्मृत्य भूतमथ पश्य भविष्यमेव,
वाल्मीकिमिङ्गयति शारद एष चन्द्रः।।

पूर्वार्ध - जन्म - कृत - कार्य - कलङ्करूपम्,
अङ्के निगूह्य खग - शोक - दया - समुत्थम्।
वाल्मीकि - काव्य - रसधार - सुधा-स्वरूपम्,
ज्योतिर्ददाति भुवि शारद एष चन्द्रः।।

तातस्य जीर्णवपुषोऽपि मनोविलोमम्,
आदेशमत्र तु निशम्य वने गतार्थम्।
हृष्टं शुभाननममुष्य तथैव दीप्तम्,
रामस्य भासयति शारद एष चन्द्रः।।

यः काञ्चनस्तु हरिणो विपिने विलुप्तः,
दृष्टः पुनश्च न कदाचिदहो! पृथिव्याम्।
अङ्के ममैव शरणं समवाप्य गूढः,
रामं विनोदयति शारद एष चन्द्रः।।

आतङ्कवाद-भरिता नव-रावणास्ते,
भूमौ चरन्ति बहवः सततं निगूढाः।
आतङ्क - पङ्कमिह नाशय मातुरङ्कात्,
रामं निवेदयति शारद एष चन्द्रः।।

शान्तं शिवं सुरभितं भुवि भारतं यत्,
सन्मार्ग - दर्शकमिदं यदि मण्डलं मे।
'पाकः' कलङ्क इव सन्निहितो ममाङ्के,
इत्थं विभावयति शारद एष चन्द्रः।।

वस्त्रं नवीन - धवलं परिधाय देहे,
नेता सुगोप्य हृदि रक्षति कालिमानम्।
तं चाऽपि मादृशमवेहि कलङ्कपूर्णम्,
सङ्केतयन् हसति शारद एष चन्द्रः।।

# शारदीय चन्द्र का सन्देश

आदि काव्य की रचना करके जो अतुल्य यश पाया है,
राम महानायक का कीर्तन जिसने सरस रचाया है।
उसके भूतकाल को भूलो शुभ्र भविष्य सदा चमके,
यही इशारा करता है यह शरत् पूर्णिमा चन्द्र हमें।।

जीवन का पूर्वार्ध छिपाया जो कलङ्क का रूप लिये,
अन्तस्तल में जिसके बहती दया काव्य का रूप लिये।
वाल्मीकि के उस स्वरूप को चद्र हमें दर्शाता है,
शरत् पूर्णिमा को यह मानो काव्य सुधा बरसाता है।।

वृद्ध पिता के आदेशों को जो प्रतिकूल भले दिखता,
वन जाने का कठिन कार्य भी जिसको दुःखद नहीं लगता।
सदा हर्ष में डूबा चेहरा खूब चमकता भाता है,
शारदीय चन्द्रमा राम का रूप हमें दर्शाता है।।

स्वर्णिम हिरण विलुप्त हुआ वह जंगल में खो गया कहाँ?
कभी नहीं पृथिवी पर पाया दृक्-समक्ष वह कभी यहाँ।
मैंने उसको अङ्क लगाया नहीं धरा पर आया है,
यही बात राम को बता दो शरत् चन्द्र की माया है।।

नए नए रावण अहिरावण घूम रहे हैं पृथ्वी पर,
फैलाते आतङ्कवाद हैं देखो मेरी जननी पर।
इस आतङ्क पङ्क को माँ के अङ्कों से तुम साफ करो,
शरत् चन्द्र कह रहा राम से इनको कभी न माफ करो।।

शरत् चन्द्रमा का यह मण्डल श्वेत चमकता जाता है,
सत्यं शिवं सुन्दरम् है यह 'हिन्दुस्तान' कहाता है।
पर इसमें कलंक जो दिखता 'पाकिस्तान' उसे जानो,
यही बात कह रहा चन्द्रमा इस विभावना को मानो।।

नहीं भेद मुझमें कोई व भारतीय नेताओं में,
वे सफेद खादी कपड़ों में दीखें श्वेत छटाओं में।
पर मेरे समान वे भी अन्दर से बिलकुल काले हैं,
हंसकर यह संकेत दे रहा चंदा सभी निराले हैं।।

ज्योत्स्नामयं जगदिदं सकलं प्रकुर्वन्,
घोराऽन्धकार - निवहं बहु बाधमानः।
पीयूषमद्य परितो निशि पौर्णमास्याम्,
निःष्यन्दयन् हसति! शारद एष चन्द्रः।।

•

## राजधान्यां प्रतिष्ठिताः

कारागारे समालक्ष्य न्यूनतामपराधिनाम्।
देवदत्तो यदा कारागाराऽध्यक्षमुवाच यत्।।

द्विमासपूर्वम् अत्राऽऽसन् बहवः पुरुषाः परम्।
कारणं किं च यन्न्यूनाः दृश्यन्ते साम्प्रतं जानाः?।।

देवदत्तस्य तत्प्रश्नं श्रुत्वा साऽवहितस्तदा।
मन्दं मन्दं विहस्याऽथ काराध्यक्ष उवाच यत्।।

अरे! किं नैव जानासि? महानिर्वाचनं सखे!।
देशेऽस्माकं सुसम्पन्नं तस्मादेव तु साम्प्रतम्।।

हत्याऽभियोगिनः सर्वे भ्रष्टताऽऽरोपिणस्तथा।
विधायकपदं लब्ध्वा राजधान्यां प्रतस्थिरे।।

•

रात चाँदनी बिखर रही है ज्योतिर्मय संसार हुआ,
गाढ़ा घना अन्धेरा भागा पूर्ण चन्द्र साकार हुआ।
अमृत की बूँदें बरसाता आज रात तो व्यस्त हुई,
देखो आज चन्द्रमा हँसता शरत्पूर्णिमा मस्त हुई।।

•

## गए राजधानी में

देवदत्त जब जेल देखने गया मिला जेलर से।
पूछा अब क्यों कम अपराधी दीख रहे पहले से?।।

तीन माह पहले आया तब अपराधी थे ज्यादा।
अब तो बहुत न्यून दिखते हैं पहले से भी आधा।।

बातें सुनकर देवदत्त की जेलर वह मुसकाता।
बोला देवदत्त से कारण उसको यूँ समझाता।।

देखो आम चुनाव देश में पूरा अभी हुआ है।
नहीं जानते क्या इतना भी उसका असर यहाँ है ।।

सदा रहे हत्या भ्रष्टाचारों के जो पानी में।
निर्वाचित हो बने विधायक गए राजधानी में।।

•

## माम् 'भारतम्' अवेहि

यो दर्शने मम गतो दिवसे व्यतीते,
कन्था-सुभूषित तनूः ज़न-संकुलेऽसौ।
किं नामधेयम्? इति सोऽवददत्र पृष्टः,
माम् 'भारतं' हि कथयन्ति जनाः समग्राः।।

•

## मेरा नाम 'भारत' है

जो था मिला कल हमें पिछले दिनों में,
मैले फटे वसन में उस भीड़ में ही।
क्या नाम है? यह सवाल किया वहाँ तो,
बोला कि 'भारत' मुझे कहते सभी हैं।।

•

## अवकाशदिने जनिः

कक्षायामेकदा कश्चिद् गुरुः प्राध्यापने रतः।
छात्रान् स पृष्टवान् एवं सरलं प्रश्नमेव यत्।।

तीर्थङ्करा महावीरा बुद्धाः श्रीगौतमास्तथा।
ईशा - मसीहवर्याश्च नानका गुरवस्तथा।।

चतुर्णां सुप्रसिद्धानाम् एतेषां हि मनस्विनाम्।
मध्ये किं वर्त्तते साम्यम्? उत्तरं ब्रूत सत्वरम्।।

गुरोस्तत्प्रश्नमाकर्ण्य कश्चित् छात्रः स्मिताननः।
समुत्थाय तु कक्षायां तत्रैवम् प्रत्युवाच यत्।।

गुरो! साम्यमिदं तावद् एकमेव प्रतीयते।
अवकाशदिनेष्वेव सर्वे जन्मानि लेभिरे।।

•

## डी०एन०ए० सूचकं न तत्

देवदत्तः स्वपुत्रस्य शिक्षाप्रगतिसूचकम्।
पत्रं विद्यालयात् प्राप्तं विलोक्य कुपितोऽब्रवीत्।।

इतं परं 'पिता' शब्दम् उच्चार्य नैव मां वद।
न चाऽऽवश्यकता तत्र सम्बुद्धौ मम वर्तते।।

तातस्य कुपितस्याऽथ समाकर्ण्य वचस्तदा।
विनीतभावमापन्नः पुत्रस्तातम् उवाच यत्।।

परन्तु पितरस्तावत् कथं कुप्यन्ति मे वृथा।
भवन्तु कृपया शान्तं सामान्यं पत्रमस्ति तत्।।

विद्यालयीय-प्रगतेः सूचकं पत्रमेव तत्।
डी०एन०ए० सूचकं पत्रं न चेदं वर्तते पितः!।।

•

## छुट्टी के दिन होवें पैदा

पाठ पढ़ाते मास्टर जी ने प्रश्न एक बच्चों से पूछा।
सरल प्रश्न का उत्तर देवें उठ करके कोई भी बच्चा।।

प्रथम महावीर तीर्थंकर और दूसरे गौतम बुद्ध।
और तीसरे मसीह ईशा चौथे गुरु नानक हैं शुद्ध।।

इन चारों में क्या समानता बोलो बच्चो खूब सोचकर।
जल्दी नहीं प्रश्न का उत्तर लेकिन देना परख जाँच कर।।

मास्टर के सवाल को सुनकर एक छात्र उठकर यूँ बोला।
इन चारों में समानता का कक्षा में रहस्य यह खोला।।

मास्टर जी मेरे विचार से यही एक इनमें समानता।
छुट्टी के ही दिन इन सबका जन्म हुआ मै यही समझता।।

•

## डी०एन०ए० रिपोर्ट नहीं यह

विद्यालय से देवदत्त ने प्राप्त पुत्र का लेखा-जोखा।
प्रगति-कार्ड में देख कुपित हो गया और जोरों से चीखा।।

नहीं आज से 'पिता' शब्द से कभी मुझे सम्बोधित करना।
और नहीं तुम बेटे मेरे मुझसे सदा दूर ही रहना।।

बात पिता के मुँह से गुस्से में जो निकली सुनकर इसको।
अति विनम्र हो बेटा बोला क्षमा करें बाबूजी हमको।।

व्यर्थ आप बाबूजी! गुस्सा यहाँ कर रहे हैं हम जानें।
कृपया शान्त रहें गुस्से को दूर भगाएँ मेरी मानें।।

यह तो मेरे विद्यालय का प्रगति-सूचना-पत्र सही है।
और आपके डी०एन०ए०-रिपोर्ट का सूचक पत्र नहीं है।।

•

## परीक्षाफलम् आहतम्

सर्वशिक्षाभियानेषु यज्ञदत्तो रतोऽब्रवीत्।
एका सुशिक्षिता छात्रा पञ्च शिक्षयितुं क्षमा।।

तस्य तद्वचनं श्रुत्वा देवदत्तो मुहुर्मुहुः।
विहस्य यज्ञदत्तं च वचनं त्वेवमाह यत्।।

परन्तु सा यदा छात्रा सुन्दरी तिर्यगीक्षणा।
पठनार्थं समायाति महाविद्यालये क्वचित्।।

तदा तत्कारणादेव परीक्षाफलमप्यहो!।
पञ्चानामिह छात्राणां ध्रुवमेव विनश्यति।।

•

## भ्रातरः कलिकालस्थाः

अज्ञातां युवतीं कश्चिद् यदा छात्रो ब्रवीति यत्।
किं भो! ब्रूहि मया सार्धं प्रचलिष्यसि कुत्रचित्?।।

क्व गन्तव्यम्? इति पृष्टे तया स छात्र उक्तवान्।
कुत्रचिदपि गन्तुं वै शक्नोमि भो! वरानने!।।

छात्रस्य वचनं श्रुत्वा छात्रा सा तमुवाच यत्।
एवमस्तु मया सार्धं पुलिस-स्टेशने चल।।

छात्रायास्तद् वचः श्रुत्वा छात्रः स व्याकुलस्तदा।
किं-कर्त्तव्यविमूढः सन् छात्रामेवम् उवाच यत्।।

किं भगिन्या समं तावद् विनोदमपि साम्प्रतम्।
किञ्चिद् कर्तुं न शक्नोमि? इत्युक्त्वा स पलायितः।।

•

## चौपट हो रिजल्ट पाँचों का

सर्वशिक्षाभियानों में जब यज्ञदत्त उत्साहित।
बोला एक सुशिक्षित कन्या करे पाँच को शिक्षित।।

उसकी बातों को सुन करके देवदत्त है कहता।
मन्द मन्द मुसकाकर उससे एक प्रश्न यूँ करता।।

तिरछी नेत्रों वाली सुन्दर यदि छात्रा मुसकाती।
शिक्षित बनने विद्यालय जब छात्रों के संग जाती।।

उसके ही कारण रिजल्ट जब वहाँ पाँच छात्रों का।
चौपट यदि हो जावे तो क्या दुःखद नहीं यह मौका?।।

•

## देखो यही कलियुगी भाई?

किसी छात्र ने जब अनजानी छात्रा से यह कहा सामने।
प्रिये! चलोगी कहीं अभी क्या बोलो मेरे साथ घूमने।।

कहाँ घूमने चला है? जब छात्रा ने पूछा शरमाकर।
अजी कहीं भी चल सकता हूँ बोला छात्र तभी मुसकाकर।।

उसकी बातें सुनकर छात्रा तब धीरे से यूँ कहती है।
चलो पुलिस-स्टेशन मेरे साथ अभी आग्रह करती है।।

किंकर्त्तव्यविमूढ़ छात्र वह छात्रा की ये बातें सुनकर।
क्षण भर देखा उस छात्रा को बोला परेशान सा होकर।।

क्या मजाक कुछ ना कर सकता मैं अपनी प्यारी बहना से।
इधर उधर देखा सोचा फिर भागा फौरन छात्र वहाँ से।।

•

## विजेता कच्छपः सदा

एकदा यज्ञदत्तस्तु देवदत्तम् उवाच यत्।
विद्यालये प्रवेशार्थं गतौ तौ शश-कच्छपौ।।

चत्वारिंशत् प्रतिशतम् अङ्काः स्युः कच्छपस्य तु।
षष्टिः प्रतिशतं चाऽङ्काः शशकस्य तथाऽभवन्।।

परं विद्यालये नाऽभूत् प्रवेशः शशकस्य तु।
कच्छपस्य प्रवेशोऽभूत् तत्र किं कारणं मतम्?।।

यज्ञदत्तस्य तत्प्रश्नं श्रुत्वा स विहसन् तदा।
प्रश्नस्य चोत्तरं तत्र देवदत्तो ब्रवीति यत्।।

शश-कच्छपयोस्तावत् प्राचीना बहु-चर्चिता।
धावनस्य पुरा स्पर्धा किं त्वया न श्रुता सखे!।।

क्रीडकाऽऽरक्षणे जाते तत्राऽऽरक्षण-कारणात्।
प्रवेशः कच्छपस्यैव सुतरां तत्र निश्चितः।।

•

## त्वं चाऽपि नैव सुन्दरी?

जलपानस्य कक्षे च महाविद्यालये स्थिताम्।
छात्रां कश्चिद् यदा छात्रो वाक्येमवम् उवाच यत्।।

किमद्य भ्रमणार्थं त्वं मया सार्धं चलिष्यसि?।
तदहं ज्ञातुमिच्छामि कृपया ब्रूहि चोत्तरम्।।

छात्रा तद्वचनं श्रुत्वा छात्रं तम्प्रत्युवाच यत्।
दर्पणे किं त्वया दृष्टं स्वकीयं न मुखं पुरा?।।

तस्यास्तद्वचनं श्रुत्वा छात्रोऽपि सस्मिताऽऽननः।
मन्दं मन्दं विहस्यैवं छात्रां ताम्प्रत्युवाच यत्।।

दृष्ट्वान् अस्मि तस्मात् त्वां कथयाम्यहम् अन्यथा।
प्रियङ्कां चोपड़ामत्राऽकथयिष्यम् अहम् मुदा।।

## कछुआ रहे विजेता

यज्ञदत्त जी देवदत्त से एक बार यह पूछ लिये।
विद्यालय-प्रवेश लेने को कछुआ व खरगोश गये।।

कछुए को चालीस फीसदी केवल अङ्क मिला था।
अङ्क साठ खरगोश प्राप्त करने में वहाँ सफल था।।

हुआ नहीं लेकिन प्रवेश विद्यालय में खरहे का।
कारण इसका क्या प्रवेश जब हुआ वहीं कछुए का?।।

यज्ञदत्त के इस सवाल को सुन मुसका कर बोला।
देवदत्त ने तत्क्षण इसके उस रहस्य को खोला।।

अरे! नहीं क्या तुम्हें पता है वह प्राचीन कहानी?।
जिसमें हार गया था खरहा दौड़ हुई बेमानी।।

जब खिलाड़ियों का आरक्षण विद्यालय में होगा।
निश्चित कछुआ उस कोटे से परमिशन पाएगा।।

•

## तुम कैसी सुन्दर हो?

विद्यालय-जलपान-कक्ष में किसी छात्र ने रुककर।
किसी एक छात्रा से पूछा धीरे से मुसकाकर।।

आज चलोगी क्या तुम मेरे साथ घूमने बोलो।
यही जानना चाह रहा मैं कृपया कुछ मुँह खोलो।।

बोली छात्रा जिसके मस्तक पर थी गुस्से की रेखा।
अपना चेहरा शीशे में क्या पहले कभी नहीं देखा?।।

सुन छात्रा की बात तभी मुसकाकर वह कहता है।
उस छात्रा को धीरे से वह यूँ उत्तर देता है।।

देखा है चेहरा अपना इस कारण ही तो कहता।
और नहीं चोपड़ा प्रियंका को न निमन्त्रित करता?।।

•

## चत्वारस्तत्र चाऽऽयान्ति

स्थानके बसयानस्य प्रतीक्षानिरतः क्वचित्।
छात्रां विलोक्य कश्चित्तु छात्र एवम् उवाच यत्।।

कन्यका बसयानं च ट्रेनयानं तथैव च।
समानान्येव सर्वाणि प्रतीयन्ते तु मे यतः।।

यानं यथैकम् आयाति तदाऽन्यत् सम्प्रयाति च।
कन्यकाऽपि तथा काचिद् आयाति याति जीवने।।

छात्रस्य टिप्पणीं श्रुत्वा सा छात्रा प्रत्युवाच यत्।
सत्यं ब्रवीषि मो बन्धो! मन्ये स्याद् अत्र तुल्यता।।

परन्तु रिक्शायाने च टैक्सीयाने तथैव च।
युवकेषु च सर्वेषु दृश्यते मे समानता।।

यदा त्वाहूयते चैकः क्वचित् स्थित्वा चतुष्पथे।
चत्वारस्तत्र चाऽऽयान्ति विचित्रं ब्रूहि किं न तत्?।।

•

## अमरीका भवेद् दूरः

अध्यापकस्तु कक्षायां छात्रान् अध्यापयन् यदा।
प्रश्नमेवं प्रकुर्वाणः सर्वेषां पुरतोऽब्रवीत्।।

दूरस्थो वर्त्तते सूर्यो देशो वाऽयम् अमेरीका।
उभयोस्तुलनायां च को वै दूरतरो भवेत्?।।

गुरोस्तद् वचनं श्रुत्वा कश्चित् छात्रस्तु तत्क्षणम्।
विचारमग्नतां तावत् नाटयन् गुरुमाह यत्।।

गुरो! मम विचारे तु सूर्योऽयं निकटस्तथा।
सुदूरश्चाऽमरीका तु सर्वथा वर्त्तते यतः।।

सूर्यो दृष्टिपथे नित्यं सर्वदैव भवेन्मम।
परं देशोऽमरीका तु न दृष्टि-पथ-मागतः।।

•

## चार भागकर आते हैं

बस की करते हुए प्रतीक्षा बस-स्टैण्ड के पास छात्र वह।
छात्रा को जब देखा तब यूँ बात कह दिया मुसकाकर यह।।

बस, ट्रेन, लड़कियाँ अजी! यह तीनों ही समान दिखती हैं।
तीनों में जो समानता है सुनो मुझे कुछ यूँ लगती है।।

जैसे बस या ट्रेन एक के बाद एक आती जाती हैं।
जीवन में लड़कियाँ हमारे वैसे ही आती रहती हैं।।

सुनकर उसकी बात तभी छात्रा ने उससे कहा सोचकर।
हो सकती है सत्य तुम्हारी बात यान से यूँ तुलना कर।।

लेकिन रिक्शा या टैक्सी जब देखा तब हमने यह पाया।
युवकों के ही साथ यहाँ भी निश्चित समानता की माया।।

चौराहे पर खड़े एक को जब हम पास बुलाते हैं।
एक नहीं तब चार चार वे भागे भागे आते हैं।।

## दूर अधिक अमरीका

अध्यापक ने छोटे बच्चों से कक्षा में जाकर।
पूछा प्रश्न सभी बच्चों से ऐसा कुछ मुस्काकर।।

बोलों बच्चों! दूर कौन पृथिवी से मुझे बताओ।
अमरीका है या सूरज है दूर मुझे समझाओ।।

अध्यापक की बातें सुनकर एक छात्र यह बोला।
कुछ विचार कर धीरे-धीरे अपना मुँह यूँ खोला।।

मास्टर जी! मेरे विचार से सूरज अधिक निकट है।
अमरीका है दूर यहाँ से नहीं जवाब विकट है।।

देखें सूरज दीख रहा यह कैसा साफ गगन में।
किन्तु नहीं अमरीका आया मेरे कभी नयन में।।

## जनकः किं न दोषभाक्?

चञ्चलं युवकं छात्रं गुरुरेवम् उवाच यत्।
प्रत्येका कन्यका नित्यं मातुर्दृष्ट्या विलोक्यताम्।।

यदा प्रत्येक-नारीं त्वं मातृभावेन द्रक्ष्यसि।
चरित्रे ते सुधारस्तु स्वयमेव भवेत् तदा।।

गुरोस्तद् वचनं श्रुत्वा मन्दस्मिति-पुरःसरम्।
छात्रस्तत्र स्वीकीयां तु शङ्कामेवम् उवाच यत्।।

मन्ये त्वेवं चरित्रे मे सुधारः स्याद् गुरो! परम्।
मम तातस्य चारित्र्ये किं न दोषो भवेत्तदा?।।

•

## कारणं तत्कथं गुरो!

विद्यालये चिकित्सायाः प्राह प्राध्यापको यदा।
जीवितुं नैव शक्नोति कोऽप्यत्र हृदयं बिना।।

अध्यापकवचः श्रुत्वा कक्षायां तत्क्षणं तदा।
देवदत्तः समुत्थाय प्राध्यापकमुवाच यत्।।

अहं स्वहृदयं तावत् प्रेमिकायै प्रदत्तवान्।
परमद्याऽपि जीवामि कारणं तत्कथं गुरो?।।

•

## अजी पिता में दोष न होगा?

एक छात्र था अति चंचल जो गुरु बोले समझा के।
हर लड़की को यदि देखो तुम मातृभाव में रख के।।

तभी तुम्हारे निज चरित्र में सदा सुधार रहेगा।
और प्रशंसित हो गुरुओं का तुमको प्यार मिलेगा।।

गुरु की बातें सुन चेला वह मन्द मन्द मुसकाता।
अपनी शंका गुरु समक्ष रख यूँ धीरे से कहता।।

माना कि इस मातृभाव में मम चरित्र सुधरेगा।
पर क्या इससे नहीं पिताजी का चरित्र बिगड़ेगा?।।

•

## यह रहस्य कृपया समझाएँ

कहा मेडिकल प्राध्यापक ने छात्रों को यह पाठ पढ़ाते।
कोई भी जीवित रह सकता नहीं कभी भी विना हृदय के।।

प्राध्यापक की बातें सुन तब देवदत्त उनसे यह बोला।
कक्षा में तत्क्षण उठ करके छात्रों के समक्ष मुँह खोला।।

हमने अपना हृदय प्रेमिका को दे डाला क्या बतलाएँ।
फिर भी मैं जिन्दा हूँ कैसे? यह रहस्य कृपया समझाएँ?।।

•

## सम्प्रेषिताः अप्सरसः कथं न?

वेदार्थ - बोधाय कलौ युगेऽस्मिन्,
छात्रस्तपस्या - निरतो यदाऽभूत्।
काले व्यतीते मघवा प्रसन्नः,
'तथाऽस्तु' वक्तुं प्रकटीबभूव।।

परन्तु छात्रो नितरां निराशः,
क्षुब्धः सरोषं मघवानम् आह।
तपो विहन्तुम् अयि! देव! पूर्वम्,
सम्प्रेषिता अप्सरसः कथं न?।।

•

## क्यों ना अप्सराएँ भेजीं?

इस कलियुग में वेद-तत्त्व का ज्ञान प्राप्त करने वन में,
तप करने को बैठा था वह छात्र ध्यान करके मन में।
बीता समय प्रसन्न हुए भगवान् इन्द्र उस जंगल में,
कहने को 'तथाऽस्तु' उससे जब प्रकट हुए तप के बल में।।

लेकिन छात्र निराश हुआ कुछ क्षुब्ध भाव से यह बोला,
दुःखी हृदय भगवान् इन्द्र के सम्मुख मन को यूँ खोला।
तपोभङ्ग करने को मेरा पहले प्रभो! अप्सराएँ,
क्यों भेजी थी नहीं आपने क्या गलती थी बतलाएँ?।।

•

## अहो! कांग्रेस चिह्नं ते

कश्चिद् युवा यदा प्रेम्णः प्रस्तावं विनिवेदयन्।
कुसुमं कमलस्याऽथ युवत्यै साग्रहं ददौ।।

युवती कुसुमं नीत्वा युवकस्य मुखे तदा।
चपेटिका-प्रहारं सा तत्क्षणं प्रत्यपादयत्।।

तद् विलोक्य युवा चासौ रुष्टः किञ्चित्ससम्भ्रमः।
प्राह यत् त्वं कथं चैवम् अप्रशस्यं प्रवर्त्तसे?।।

युवकस्य वचः श्रुत्वा युवती तिर्यगीक्षणा।
मन्दं मन्दं विहस्यैवं युवकं प्रत्युवाच यत्।।

यथा त्वं भाजपा-चिह्नं प्रिय! मह्यं प्रदत्तवान्।
अहं कांग्रेस-चिह्नं तत् तुभ्यं दत्तवती तथा।।

•

## संसारे को महामूर्खः?

स्वविवाहस्य सन्दर्भं गुप्तं कर्त्तुं समुत्सुकः।
प्रेमी तु प्रेमिकामाह निर्दिशन् गोपनीयताम्।।

आवां निज-विवाहस्य वार्त्तां पूर्णतया प्रिये!।
गुप्तां सम्पादयिष्यावो वक्तव्यं न च तत् क्वचित्।।

प्रेमिणो वचनं श्रुत्वा प्रेमिका प्रत्युवाच यत्।
परन्तु स्वसखीं गीतां कथयिष्याम्यहं यतः।।

सा तु मां प्रायशो ब्रूते यत्कश्चिन्मूर्ख एव हि।
मया समं विवाहं वै संसारे कामयिष्यते।।

•

## दिया कांग्रेस चिह्न तुमको

एक युवा प्रेमी ने अपने हृदय प्रेम को कर उद्घाटित।
कभी एक सुन्दर युवती को कमल पुष्प दे दिया प्रहर्षित।।

उस युवती ने फूल ले लिया और नहीं कुछ समझा सोचा।
तत्क्षण ही उस युवा व्यक्ति के मुख पर मारा एक तमाचा।।

इसे देख वह युवक रुष्ट पूछा तुमने यह क्यों कर डाला।
मैंने कोमल फूल दिया पर उटपटांग हरकत कर डाला?।।

बातें सुन उसकी वह युवती तिरछी नेत्रों वाली बोली।
मन्द मन्द मुसकाती उसके सम्मुख यूँ रहस्य फिर खोली।।

जैसे तुम भाजपा-समर्थक अपना कमल निशान लिया।
मैं तो हूँ कांग्रेस पक्षधर अपना हाथ निशान दिया।।

•

## संसार में कौन महामूर्ख?

शादी की बातें ना फैले अभी गुप्त ही बनी रहे।
कहा प्रेमिका को प्रेमी ने बात अभी अनसुनी रहे।।

कहना नहीं किसी से सबको अचरज में ही रखना है।
काम पूर्ण हेने पर ही इस बारे में कुछ कहना है।।

प्रेमी की बातें सुन करके कहा प्रेमिका ने इठलाकर।
किन्तु सहेली गीता को मैं सुख पाऊँगी इसे बताकर।।

पता नहीं क्या सोच सदा वह कहती रहती बात बनाकर।
कौन मूर्ख ऐसा होगा जो खुश होगा मुझको अपनाकर?।।

•

## कथम् अग्रेसरो न स्यात्?

प्रेमालापं प्रकुर्वाणम् उद्याने च परिभ्रमत्।
एकदा देवदत्तस्य कन्यामित्रम् (गर्ल फ्रेण्ड) उवाच यत्।।

प्रिय! त्वं चलभाषस्य सन्देशो यदि सम्भवेः।
सुरक्षितं तदा कृत्वा त्वपठिष्यम् पुनः पुनः।।

कन्यामित्रस्य तद् वाक्यं श्रुत्वा किञ्चिद् विहस्य च।
देवदत्तस्तदानीं तत् कन्यामित्रम् उवाच यत्।।

कथं सुरक्षितं चैव सन्देशं प्रकरोषि भो!।
अग्रेसरं (फॉरवर्ड) सखीभ्यस्तं करिष्यसि कथं न किम्?।।

•

## भूताः प्रेताः पलायिताः?

सखायं पुरुषं कन्या सुदर्शनीयमानिनी।
मन्दं विहस्य पप्रच्छ तस्मिन् प्रेमपरायणा।।

प्रिय! ब्रूहि तव स्वप्ने निशि चाऽहं यदा कदा।
आगच्छामि न वा तत्र ज्ञातुम् इत्येव कामये?।।

तस्यास्तद् वचनं श्रुत्वा पुरुषोऽपि विलक्षणः।
स्वकीयाम् अरुचिं तत्र ज्ञापयन् प्रत्युवाच यत्।।

हनूमतस्तु चालीसां शयनात् पूर्वमेव हि।
पठामि प्रत्यहं तस्मात् कथं स्वप्ने तवाऽऽगमः?।।

•

## फॉरवर्ड क्यों ना करती?

करता हुआ एक दिन बातें प्रेममयी रस भींगी सी।
देवदत्त के गर्ल फ्रेण्ड ने कहा उसे मदहोशी सी।।

हे प्रिय! इस मोबाइल के सन्देश-सदृश यदि तुम होते।
करके उसे सुरक्षित हम तो पुनः पुनः पढ़ते रहते।।

गर्ल फ्रेण्ड की बातें सुन तब देवदत्त उससे बोला।
मन्द मन्द हँसता मुसकाता धीरे से यूँ मुँह खोला।।

यदि होता सन्देश-सदृश तो क्यों केवल पढ़ती रहती?।
अपनी सहेलियों को भी तुम फॉरवर्ड क्यों ना करती?।।

•

## भूत-प्रेत कैसे आवें?

अपने को अति सुन्दर ही जब मान रही कन्या कोई।
पुरुष-मित्र से यूँ बोली तब उसकी प्रियता में खोई।।

प्रिय! बोलो तुम सत्य बताना कभी रात को सपने में।
आती हूँ या नहीं तुम्हारे इच्छा यही जानने में।।

उसकी इन बातों को सुन तब पुरुष-मित्र उससे बोला।
उसके सुन्दरता-घमण्ड को कुछ यूँ कहकर था तोला।।

हनुमान-चालीसा पढ़कर निर्भय हो जब सोता हूँ।
रात वहाँ तुम कैसे आओ? तब सपनों में खोता हूँ।।

•

# अद्भुतः संवादः

*सूचना* : वाग्दानाऽनन्तरं तावद् वार्त्तालापस्तु योऽभवत्।
प्रेमि-प्रेमिकयोर्मध्ये तं प्रस्तौमि भवत्पुरः।।

*प्रेमी* : एतस्य दिवसस्यैव प्रतीक्षाकरणे सदा।
मन्ये बहुतिथाद् देवि! दिवसा यापिता मया।।

*प्रेमिका* : अस्तु, सर्वं समाप्तं चेत् प्रस्थानं क्रियतां गृहे।
*प्रेमी* : नैव भो! क्रियताम्, अत्र शीघ्रता वर्त्तते कथम्?।।

*प्रेमिका* : ब्रूहि किं त्वं मया सार्धं बहु प्रेम करिष्यसि?।
*प्रेमी* : निरन्तरं करोम्येव करिष्यामि च सर्वदा।।

*प्रेमिका* : जीवनेऽस्मिन् मया सार्धं विश्वासघातमत्र च।
कदाचिन्न करिष्येऽहम् इत्येवं कथयस्व माम्।।

*प्रेमी* : न हि भो! न करिष्येऽहं कदाचिदपि जीवने।
यद्येवं स्यात् तदा तत्र मृत्युमेव हि कामये।।

*प्रेमिका* : ब्रूहि किं नु मया सार्धं व्यवहारमनिन्दितम्।
करिष्यसि सदा स्निग्धं भद्रलोक-प्रशंसितम्?।।

*प्रेमी* : एवं भो! सर्वदा तत्र करिष्यामि पुनः पुनः।
सहजा सा प्रवृत्तिर्मे किं पृच्छसि मुहुर्मुहुः?।।

*प्रेमिका* : प्रताडनं कदाचित् किं न तु मे प्रकरिष्यसि?।
*प्रेमी* : दुःखितं मे मनो यत् त्वं वृथा प्रश्नान् करोषि भो!।।

*विशेष* : विवाहस्याऽष्टमे वर्षे संवादमुभयोरिमम्।
अधस्तात् क्रमशश्चोर्ध्वं पठन्तु कृपया जनाः।।

●

# अद्भुत संवाद

*सूचना* : वाग्दान के बाद हुआ संवाद वहाँ आपस में।
प्रेमी और प्रेमिका का जो प्रस्तुत करता अब मैं।।

*प्रेमी* : इन्तजार में आज इसी दिन के मैं देखो कब से।
काट दिए दिन रात न जाने दिन बीते वे कैसे?।।

*प्रेमिका* : खैर, समाप्त हुआ अब सब तो घर को हम प्रस्थान करें।
*प्रेमी* : नहीं, अभी क्या ऐसी जल्दी जो हम सब शीघ्रता करें।।

*प्रेमिका* : खूब करोगे प्रेम सदा अब तो जीवन में मुझसे।
*प्रेमी* : अजी सदा से मैं करता हूँ और करूँगा अब से।।

*प्रेमिका* : ऐसा वचन कहो तुम मुझसे तुम पर सदा मरूँगा।
नहीं बेवफाई जीवन में तुमसे कभी करूँगा।।

*प्रेमी* : ऐसा कार्य नहीं जीवन में तुमसे कभी करूँगा।
यदि ऐसा करना हो उससे पहले सदा मरूँगा।।

*प्रेमिका* : मेरे साथ सदा अच्छा व्यवहार सुसभ्य जनों सा।
करके सदा रिझाओगे क्या बोलो भद्र जनों का?।।

*प्रेमी* : ठीक कह रही यह सब तो मैं करता रहूँ सदा ही।
यह स्वभाव में ही मेरे क्यों बार बार पूछो ही?।।

*प्रेमिका* : गुस्से में तुम कभी न मेरे ऊपर हाथ उठाओ।
*प्रेमी* : ये सब बात व्यर्थ की कह कर मेरा मन न दुखाओ।।

*विशेष* : आठ वर्ष बीते शादी के तब संवाद सुधी जन।
कृपया नीचे से ऊपर को पढ़ जाने दम्पति-मन।।

●

## निष्णाता ज्यौतिषे शास्त्रे

एकदा देवदत्तस्य सुता तातं मुहुर्मुहुः।
स्वकीयं ज्यौतिष-ज्ञानं कीर्त्तयन्ती जगाद यत्।।

श्वस्तने दिवसे तात! ध्रुवमेव गृहे तु नः।
न्यून एकः सदस्यः स्यात् इति मे वर्त्तते मतिः।।

अथाऽग्रिमे दिने तावद् देवदत्तस्य सा सुता।
स्वकीय-प्रेमिणा सार्धं गृहादेव पलायिता।।

वृत्तं चैनं समाकर्ण्य यज्ञदत्तः सखा यदा।
सान्त्वनां दातुकामश्च देवदत्तगृहे गतः।।

विलोक्य यज्ञदत्तं तु सखायं स्वगृहे तदा।
दुःखितः शोकसन्तप्तो देवदत्तो ब्रवीति यत्।।

मन्ये नाऽभूत् सुताया मे भद्रम् आचरणम् परम्।
तस्यास्तु ज्यौतिषं ज्ञानं सुसिद्धं वर्त्तते सखे!।।

•

## नाऽस्ति भोजन-सामग्री

प्रेमि-प्रेमिकयोर्मध्ये विवाहो निश्चितो यदा।
प्रेमिका प्रेमिणं तावद् विहसन्ती ब्रवीति यत्।।

प्रिय! भोजन-निर्माणं न जानामि कथञ्चन।
तदत्र पूर्वमेवाऽद्य भवन्तं ज्ञापयाम्यहम्।।

तस्यास्तद् वचनं श्रुत्वा प्रेमी तां स्निग्धया गिरा।
विहसन्नब्रवीदेवं शान्तेन मनसा तदा।।

प्रिये! त्वमपि जानीहि कर्मणा कविरस्म्यहम्।
भोजनस्याऽपि सामग्र्यो वर्त्तन्ते न गृहे मम।।

•

## सिद्धज्ञान ज्योतिष का

एक बार श्रीदेवदत्त की पुत्री जो थी युवती।
अपना ज्योतिष ज्ञान बघारे यही पिता से कहती।।

सुनें पिताजी कल ही अपने घर में निश्चित जानें।
होगा एक सदस्य अजी! कम यह मेरी मति मानें।।

अगले दिन फिर देवदत्त की वह कन्या बेचारी।
प्रेमी के संग भाग गई थी घर से मति की मारी।।

समाचार सुनकर यह भारी यज्ञदत्त जल्दी ही।
ढाढस देने देवदत्त के घर में पहुँचा था ही।।

देवदत्त ने ज्यों ही देखा अपने बाल-सखा को।
दुःखी शोक-सन्तप्त भाव से त्यों ही बोला उसको।।

माना मैंने बेटी का कैरेक्टर ठीक नहीं था।
लेकिन ज्यौतिष ज्ञान यहाँ पर निःसन्दिग्ध सही था।।

•

## भोजन-सामग्री नहीं रहती

प्रेमी और प्रेमिका का जब हुआ विवाह सुनिश्चित।
प्रेमी से तब कहा प्रेमिका ने यूँ बातें समुचित।।

खाना नहीं बनाना जानूँ में तो प्यारे! कुछ भी।
यही बात मैं पहले से ही कह देती हूँ सच भी।।

उसकी बात सुनी प्रेमी ने बड़े प्रेम से हँसकर।
शान्तचित्त तब वहाँ प्रेमिका से यूँ बोला रुककर।।

प्रिये! सुनो हम कवि हैं केवल कविता करना जानें।
भोजन की सामग्री घर में रहे न कुछ भी मानें।।

•

## यज्ञदत्तस्य देहि मे

एकदा देवदत्तस्तु विहरन् वै नदी - तटे।
वार्त्तालापप्रसङ्गे च स्वकन्यामित्रम् (गर्ल-फ्रेण्ड) अब्रवीत्।।

महालयो न मत्पार्श्वे यज्ञदत्त-समो भवेत्।
तथापि हृदये प्रेम्णा वासयिष्यामि सर्वथा।।

यज्ञदत्त-समं चाऽपि कारयानं न वर्त्तते।
तथापि स्थापयिष्ये त्वां चक्षुषोः पक्ष्मसु प्रिये!।।

तादृशं च धनं नाऽस्ति यज्ञदत्ते यथा भवेत्।
तथापि भोजयिष्ये त्वाम् उपार्ज्य धनम् अन्ततः।।

तस्य तद् वचनं श्रुत्वा सा कन्यामित्रम् आह यत्।
कथं प्रिय! वदस्येवम्? अलं निगदितेन ते।।

यदि मे जीवने बन्धो! कष्टं नैव दिदृक्षसि।
कृपया चलभाषाऽङ्कं यज्ञदत्तस्य देहि मे।।

●

## प्रदेयश्चलभाषाऽङ्कः

एकदा यज्ञदत्तस्तु देवदत्तम् उवाच यत्।
शुभजन्मोत्सवः श्वस्तु कन्यामित्रस्य वै मम।।

उपहारं पर तस्यै प्रयच्छेयं तु कीदृशम्।
निश्चेतुं नैव शक्नोमि तत्कुरुष्व सहायताम्।।

तस्य तद्वचनं श्रुत्वा देवदत्तो ब्रवीति यत्।
कीदृशी वर्त्तते सा च ब्रूहि पूर्वमिदं सखे!।।

तस्य तत्प्रश्नमाकर्ण्य यज्ञदत्तो ब्रवीति यत्।
अत्यन्तं सुन्दरी सा तु महिलामित्रमस्ति मे।।

तदुत्तरं समाकर्ण्य देवदत्तो ब्रवीति यत्।
तदा तु चलभाषाऽङ्को मम तस्यै प्रदीयताम्।।

●

## यज्ञदत्त का ही नम्बर दो

गर्ल-फ्रेण्ड के साथ एक दिन टहले नदी किनारे।
बातचीत में देवदत्त ने कहा हृदय के हारे।।

नहीं यज्ञदत्त के समान अब मेरे पास महल है।
लेकिन तुमको हृदय-महल में रख लूँगा निश्चय है।।

नहीं यज्ञदत्त के सदृश कार है कोई मेरे।
पर आँखों के पलकों पर मैं बैठाऊँ ले फेरे।।

नहीं यज्ञदत्त के सदृश है रुपया-पैसा लॉकर।
अच्छा तुम्हें खिलाऊँगा पर रुपया खूब कमाकर।।

गर्ल-फ्रेण्ड ने कहा तभी सुनकर के ऐसी बातें।
क्यों बेकार बात यूँ करते नहीं सुनूँ अब आगे।।

अगर नहीं जीवन में मेरे, दुःख देखना चाहो।
यज्ञदत्त के मोबाइल का नम्बर मुझे बताओ।।

●

## दे दो मोबाइल नम्बर

यज्ञदत्त लेता सलाह है देवदत्त से यह कहकर।
मेरी गर्लफ्रेण्ड का कल है जन्मदिवस का शुभ अवसर।।

क्या उपहार उसे दूँ उस दिन हमें समझ ना आता है।
कुछ सलाह इसमें मुझको दो अगर तुम्हें कुछ भाता है।।

यज्ञदत्त की बातें सुनकर देवदत्त उससे कहता।
कैसी वह लगती है पहले यह भी तो दो हमें बता?।।

सुनकर यह सवाल उसका तब यज्ञदत्त यूँ है कहता।
अरे! बहुत सुन्दर है वह तो इसमें कुछ ना शक रहता।।

देवदत्त यूँ कहता है फिर सुन करके उसका उत्तर।
अरे! नहीं कुछ सोचो दे दो मेरा मोबाइल नम्बर।।

●

## कथम् एवं विलम्बितः?

युवा प्रौढ़त्वम् आपन्नः कश्चित् सन्दिग्धमानसः।
अतिसङ्कोचशीलश्च देवदत्तम् उपागमत्।।

देवदत्त-समक्षं च तस्य कार्यालये तदा।
वक्तुकामोऽभवत् किञ्चित् साहसं न च दर्शितम्।।

देवदत्तस्तु तद् वीक्ष्य स्वयमेव हि पृष्टवान्।
किं च भो! कथनेच्छा ते? किं च वाञ्छसि मां वद।।

देवदत्त-वचः श्रुत्वा पुरुषः स ब्रवीति यत्।
अहं विंशति-वर्षेभ्यो भवतः कन्यया समम्।।

निरन्तरं प्रेम कुर्वे सत्यं च कथयामि यत्।
साम्प्रतं हि तया सार्धं विवाहं कर्त्तुम् उत्सुकः।।

तस्य तद्वचनं श्रुत्वा देवदत्तोऽब्रवीत् तदा।
मया विचारितं त्वं तु पेंशनार्थं समागतः।।

●

## विवाहोऽपि भवेद् द्यूतम्

द्यूतव्यसनिनं तावत् प्रेमिणं प्रेमिकाऽब्रवीत्।
प्रतिजानीहि यद् द्यूतं क्रीडितासि न तत् पुनः।।

प्रेमिकाया वचः श्रुत्वा प्रेमी प्राह विहस्य यत्।
त्वया सह विवाहोऽपि किं द्यूतं नैव वर्त्तते?।।

●

## इतना भी विलम्ब क्या?

प्रौढ़ावस्था की डेहरी पर एक युवा शरमाया सा।
देवदत्त के पास गया जब बिलकुल ही सकुचाया सा।।

देवदत्त जी के ऑफिस में जाकर कुछ कहना चाहा।
लेकिन बोल सका ना कुछ भी और न साहस दिखलाया।।

देवदत्त ने ही पूछा तब बोलो क्या कहना चाहो?।
चाह रहे हो क्या मुझसे तुम? कहो न बिलकुल सकुचाओ।।

देवदत्त की बातें सुनकर प्रौढ़ युवा वह कहता है।
पिछले बीस वर्ष से उसकी लड़की पर वह मरता है।।

लेकिन हिम्मत नहीं हुई थी यह कहना वह चाह रहा।
उसके संग विवाह करके ही जीवन अपना मान रहा।।

उसकी ऐसी बातें सुनकर देवदत्त ने यूँ कोंचा।
पेंशन हेतु यहाँ आए तुम मैंने तो यह था सोचा।।

●

## शादी क्या नहीं जुआ है?

एक जुआरी प्रेमी से प्रेमिका कभी कहती थी।
'जुआ कभी न खेलूँगा' यह वचन माँग करती थी।।

किन्तु प्रेमिका की बातें सुन प्रेमी वह कहता है।
तेरे संग विवाह करना क्या बोलो नहीं 'जुआ' है?।।

●

## गमनाऽऽगमने रुणद्धि

मन्मानसेऽभिलषितं ननु मेलनस्य,
सत्यं चकास्ति बहु तेन समं सदैव।
पश्यामि किन्तु बहु-भाटक-वृद्धिरेषा,
चित्तं ममाऽत्र गमनाऽऽगमने रुणद्धि।।

•

## उत्साह न आने जाने में

उनसे मिलने की इच्छा तो मन में खूब हमारे,
बात सही यह कि रहती है निश्चित ठाठे मारे।
पर जब रोज-रोज बढ़ता है यहाँ किराया भारी,
दिल में अब उत्साह न होता जाने में लाचारी।।

•

## ईर्ष्यया भस्मसाद् गताः

भोजनस्याऽथ निर्माणे निमग्ना पतिमेकदा।
पत्नी प्रोचे तु सौन्दर्यं वर्धते मे निरन्तरम्।।

तस्यास्तद् वचनं श्रुत्वा विस्मितः पतिराह यत्।
कथं ते वर्धते देवि! सौन्दर्यं ब्रूहि माम् इति।।

पत्युस्तद्वचनं श्रुत्वा रोटिका-पाचने रता।
नवोढा सा प्रगल्भा तु पत्नी पतिम् उवाच यत्।।

विलोक्य माम् इमास्तावत् रोटिका अपि साम्प्रतम्।
ईर्ष्यया ज्वलिता भूत्वा भस्मसात् प्रतिभान्ति मे।।

•

## कथं जातो विवाहितः?

देवदत्तस्य भार्या तु नारीणां प्रति लोलुपम्।
एकदा स्वपतिम्प्राह धर्षयन्ती मुहुर्मुहुः।।

विलोक्य युवतीं तत्र स्थिरदृष्टिः कथं भवान्।
विस्मरत्येतदप्यत्र यत्त्वम् असि विवाहितः।।

भार्याया वचनं श्रुत्वा देवदत्तोऽपि तत्क्षणम्।
मन्दं मन्दं विहस्यैवं भार्यां वचनमब्रवीत्।।

विलोक्य सुन्दरीं नाऽहं विस्मरामि स्वयं तथा।
परं स्मरामि यत्तत्र कथं पूर्वं विवाहितः?।।

•

## खाक हुई ईर्ष्या से जलकर

मगन बनाने में भोजन को एक बार पत्नी यह बोली।
रोज रोज सुन्दरता मेरी बढ़ती जाती यूँ मुँह खोली।।

बातें सुनकर उसकी पति भी बोल उठा मुझको बतलाओ।
सुन्दरता बढ़ रही कहाँ से इस रहस्य को तुम सुलझाओ।।

पति की बातें सुनकर रोटी सेंक रही पत्नी वह भोली।
मन्द मन्द मुसकाकर पति को देख प्रेम से यूँ फिर बोली।।

मुझे देखकर ये देखो रोटियाँ यहाँ ईर्ष्या से कैसे।
खाक हुई जाती हैं जलकर अब समझावें तुमको कैसे?।।

•

## पहले हुआ विवाहित क्यों?

सदा नारियों के प्रति दृष्टि लुब्ध भाव की थी जिसकी।
ऐसे देवदत्त से बोली समझाकर पत्नी उसकी।।

देख कहीं भी सुन्दर युवती क्यों तुम अजी ठिठक जाते हो?।
और विवाहित हूँ मैं यह भी बात भूलकर रुक जाते हो।।

पत्नी की बातों को सुन वह देवदत्त देखा मुसकाया।
पश्चात्ताप-भाव मुख पर ला पत्नी को वह यूँ समझाया।।

देख सुन्दरी को मैं बिलकुल भूला नहीं विवाहित हूँ मैं।
लेकिन यही सोचता हूँ कि पहले हुआ विवाहित क्यों मैं?।।

•

## न किमप्यत्र वस्तु मे

पतिपत्न्योस्तु मध्ये यः कलहो दिवसेऽभवत्।
तदा रोषसमायुक्ता पत्नी पतिमुवाच यत्॥

गृहेऽस्मिन् न किमप्यत्र वर्त्तते त्वदुपार्जितम्।
सर्वाण्यपि तु वस्तूनि पित्रा दत्तानि सन्ति मे॥

आभूषणानि चैतानि पात्राणि विविधानि च।
बहुमूल्यानि वस्त्राणि सोफा-पर्यङ्कमेव च॥

पत्न्यास्तद्वचनं श्रुत्वा पतिः क्षोभ-समन्वितः।
तदानीं दुःखसन्तप्तो न किमप्युत्तरं ददौ॥

परं रात्रिर्यदा जाता सुप्ताः सर्वे गृहे तथा।
दुर्योगात् तस्कराः केचिद् गृहे तत्र समागताः॥

रात्रौ द्विवादने तावद् ध्वनिमाकर्ण्य सा गृहे।
पत्नी जागरयन्ती तं चौराऽऽशङ्कां न्यवेदयत्॥

पत्न्याः शङ्कां समाकर्ण्य निरुद्विग्नस्तदा पतिः।
निश्चिन्तभावमापन्नः पत्नीमेवम् उवाच यत्॥

गृहे मम किमप्यत्र वस्तु-जातं न वर्त्तते।
अतश्चिन्ता कथं मे स्यात्? इत्युक्त्वा स प्रसुप्तवान्॥

•

# यहाँ वस्तु कोई ना मेरी

पति पत्नी के बीच में झगड़ा एक दिवस था भारी।
गुस्से में पत्नी ने पति की यूँ कहकर आरती उतारी।।

घर की कोई चीज नहीं है जिसको तुम खरीद कर लाए।
यह सब तो सामान हमारे पापा जी ने यहाँ दिलाए।।

ये सारे गहने और बर्तन उनके द्वारा दिए हुए हैं।
देखो सभी कीमती कपड़े सोफा और पलंग मिले हैं।।

पत्नी की बातों को सुनकर दुःखी और विक्षुब्ध बन गया।
पति कुछ भी ना बोला तब तो लेकिन चिन्तित मौन रह गया।।

आयी रात सभी जब सोए घर में था सन्नाटा छाया।
दुःसंयोग हुआ उस दिन ही चोरों का समूह था आया।।

रात दो बजे खटपट सुनकर पत्नी ने जब उसे उठाया।
घर में चोरों के होने की आशंका उसको बतलाया।।

पत्नी की शंका सुनकर भी हो निश्चित भाव में आकर।
दुःख रहित दिखलाता खुद को बोल उठा पति यूँ झल्लाकर।।

इस घर में तो वस्तु नहीं जब कुछ भी कहलाती है मेरी।
पुनः मुझे चिन्ता कैसी हो? मैं तो सोऊँ रात अँधेरी।।

●

# किं प्रतिषेध-कारणम्?

वार्त्तालाप-प्रसङ्गे तु देवदत्तम् अथैकदा।
श्रावयन् घटनाम् एकां यज्ञदत्त उवाच यत्।।

वर्षायां पुरुषः कश्चित् प्रयाति स्म यदा पथि।
युवत्यपि तदा काचित् छत्रमादाय यात्यहो।।

युवती पुरुषं तं च न्यवेदयदिदं तदा।
भवानपि मया सार्धं छात्रच्छायां समाश्रयेत्।।

परन्तु पुरुषश्चाऽसौ धन्यवादं प्रदाय वै।
तस्याश्छत्रस्य वर्षायाम् आश्रयं न गृहीतवान्।।

संश्राव्य घटनामेनां देवदत्तं मुहुर्मुहुः।
यज्ञदत्तस्तदा तत्र प्रश्नमेनम् उवाच यत्।।

सखे! घटनया शिक्षा काऽनया प्राप्यते तथा।
कारणं प्रतिषेधस्य किमासीत् तन्नरस्य च?।।

यज्ञदत्तस्य तत्प्रश्ने देवदत्तो जगाद यत्।
एतद्घटनया काचित् शिक्षा नैवाऽत्र लभ्यते।।

वस्तुतः पृष्ठतस्तस्य पुरुषस्य तदा पथि।
भार्याऽप्यनुययौ तत्र तस्मात् छत्रं निषिद्धवान्।।

•

# क्यों छोड़ा छतरी को?

बातचीत में यज्ञदत्त ने एक बार यह घटना।
देवदत्त को सुना दिया था बालसखा जो अपना।।

बारिश में था एक आदमी पथ में था जो जाता।
साथ तभी युवती जाती थी वहाँ लगा के छाता।।

युवती ने सौजन्य दिखाया उससे किया निवेदन।
कृपया मेरे छाते का ले लेवें आश्रय भगवन्।।

लेकिन धन्यवाद देकर के चला आदमी आगे।
लिया नहीं आश्रय छाते का भले वहाँ पर भींगे।।

इस घटना को सुना वहाँ पर यज्ञदत्त ने क्षण में।
देवदत्त से पूछा उत्तर कुछ मुसकाकर मन में।।

मित्र बताओ इस घटना से शिक्षा क्या मिलती है?।
कारण क्या था उस व्यक्ति में जो निषेध-वृत्ति है?।।

इस सवाल पर देवदत्त की वाणी यूँ कहती है।
अजी! हमें शिक्षा घटना से कुछ भी ना मिलती है।।

वास्तव में पत्नी पीछे थी परखा वहाँ समय को।
अतः व्यक्ति ने त्याग दिया था छतरी के आश्रय को।।

●

## विद्युत् सञ्चारिता भवेत्

एकदा देवदत्तस्य पत्नी कलहकारिणी।
वार्त्तालाप-प्रसङ्गे तु स्वपतिम् एवम् अब्रवीत्।।

गत-जन्मदिने तावत् सुन्दरं लौह-निर्मितम्।
पर्यङ्कं सुन्दरं मह्यं प्रिय! त्वं समुपाहरः।।

कृपया ब्रूहि वर्षेऽस्मिन् जन्मनो दिवसाऽऽगमे।
किं प्रदास्यसि सस्नेहं? ज्ञातुम् इत्येव कामये।।

तस्य तद्वचनं श्रुत्वा तत्कार्यैः क्षुब्धमानसः।
गम्भीरो देवदत्तोऽपि वचनं त्वेवम् अब्रवीत्।।

विचारयामि पर्यङ्के तस्मिन् वै लौहनिर्मिते।
विद्युत्-संचारणस्यैव व्यवस्था तद्दिने भवेत्।।

•

## विचारे स्यात् कथं व्ययः?

एकदा देवदत्तस्य पत्नी मधुरभाषिणी।
वार्त्तालाप-प्रसङ्गे तु पतिम् एवम् उवाच यत्।।

प्रायः विचारयाम्येतद् त्वया सह कदाप्यहम्।
गत्वा देशेऽमरीकायां भ्रमणं साधयानि भो!।।

प्रिय! ब्रूहि तदर्थं च कियद् धनमपेक्षते?।
कियान् व्ययो भवेत् तत्र ज्ञातुमिच्छाम्यहं ततः।।

पत्न्यास्तद् वचनं श्रुत्वा देवदत्तो ब्रवीति यत्।
न हि कश्चिद् व्ययस्तत्र व्यर्थं चिन्तयसे कथम्?।।

पत्युस्तदुत्तरं श्रुत्वा तत्पत्नी निजगाद यत्।
कथं न हि व्ययस्तत्र ज्ञातुमिच्छामि कारणम्?।।

पत्न्याः प्रश्नं समाकर्ण्य देवदत्तो ब्रवीति यत्।
विचारे केवले तत्र धनस्य स्यात् कथं व्ययः?।।

•

## बिजली तार लगावें

देवदत्त की पत्नी जो थी कलहकारिणी घर में।
एक दिवस पति से यूँ बोली वह बातों बातों में।।

पिछले जन्म-दिवस पर तुमने एक पलंग दिया था।
लोहे का जो निर्मित सुन्दर वह उपहार किया था।।

लेकिन जन्म-दिवस पर अबकी क्या दोगे बतलाओ?।
यही जानना चाह रही हूँ मुझको कुछ समझाओ।।

उसकी इन बातों को सुन वह क्षुब्ध कार्य से उसके।
बोल उठा गम्भीर भाव में यूँ कसता कुछ फिरके।।

सोच रहा हूँ प्रिये! तुम्हारे उसे पलंग लोहे में।
बिजली का मैं करूँ कनेक्शन जन्म-दिवस मौके में।।

## क्या पैसा लगता है?

देवदत्त की पत्नी बोली कुछ हँसती मुसकाती।
एक दिवस बातों बातों में पति को यूँ समझाती।।

सोच रही हूँ कभी तुम्हारे साथ घूमने चल दूँ।
मौज मनाऊँ अमरीका में भ्रमण वहाँ कुछ कर लूँ।।

अच्छा बोलो कितना पैसा खर्च वहाँ पर होगा?।
कितना धन हो यहाँ अपेक्षित कितना कहाँ लगेगा?।।

पत्नी की बातों को सुनकर देवदत्त यूँ बोला।
कुछ भी खर्च नहीं होगा जी! क्यों चिन्तित यह चोला?।।

पति का उत्तर सुनकर पत्नी बोली कैसे मानूँ?।
कुछ भी खर्च नहीं होगा जी! कारण क्या मैं जानूँ?।।

पत्नी के सवाल को सुनकर देवदत्त कहता है।
अजी! सोचने में ही केवल क्या पैसा लगता है?।।

## प्रतिवर्षं समायाति

नवोढा काचिदेका तु स्वपत्या सममेकदा।
मधु-रात्रि-व्यतीतार्थं क्वचिद् भोजालये गता।।

प्रबन्धकस्तदा तत्र दृष्ट्वा तं पुरुषं वरम्।
पञ्जिकायां तु तन्नाम लेखने निरतोऽभवत्।।

तं तथा वीक्ष्य कुर्वन्तं प्रहृष्टा सा वधूस्तदा।
प्रबन्धकमिदं तत्र सहसा वाक्यम् अब्रवीत्।।

मन्ये मम पतिश्चाऽयं प्रसिद्धः पुरुषस्तथा।
भवद्भिस्तस्य नामाऽपि विना पृष्टं विलिख्यते।।

वध्वास्तद् वचनं श्रुत्वा भोजालय-प्रबन्धकः।
मन्दं मन्दं विहस्यैवं नवोढां निजगाद यत्।।

न हि भो! नैवमस्त्येतत्, एष श्रीमान् भवत्पतिः।
इहैव मधु-रात्र्यर्थम् आयाति प्रतिवत्सरम्।।

•

## वृथा स्याद् दीर्घजीवनम्

दीर्घजीवनमालब्धुम् उपायः कश्चिदुच्यताम्।
यज्ञदत्तेन पृष्टे तु देवदत्तो मुहुर्मुहुः।।

विहस्य किञ्चिदेवं स यज्ञदत्तं ब्रवीति यत्।
विवाहं कुरुतां शीघ्रं दीर्घायुष्यं यदीच्छसि।।

देवदत्तवचः श्रुत्वा यज्ञदत्तस्तु पृष्टवान्।
विवाहेन कथं तावद् दीर्घायुर्मे भविष्यति?।।

देवदत्तस्तदा ब्रूते विवाहाऽनन्तरं सदा।
वृथा लम्बायमानं ते जीवनं प्रतिभास्यति।।

•

## प्रत्येक वर्ष आते हैं

एक बार थी एक नवेली आई किसी शहर में।
हनी-मून सोत्साह मनाने पति के संग होटल में।।

होटल के मैनेजर ने जब उसके पति को देखा।
और रजिस्टर में होटल के किया नाम का लेखा।।

उसको यूँ करते देखा तो हुई प्रसन्न नवेली।
बोली मैनेजर से हँसकर बात एक अलबेली।।

शायद ये पतिदेव हमारे अति प्रसिद्ध लगते हैं।
सबको उनका नाम पता जो बिन पूछे लिखते हैं।।

सुनकर बातें नई बहू की होटल मालिक बोला।
मन्द मन्द धीरे से हँसकर था रहस्य यह खोला।।

अजी! नहीं यह बात नहीं है, ये पतिदेव तुम्हारे।
हनी-मून को आते होटल में हर साल हमारे।।

•

## दीर्घजीवन व्यर्थ होता है

देवदत्त से यज्ञदत्त कहता यह तुम समझाओ।
लम्बी आयु मिले कैसे अब कुछ उपाय बतलाओ।।

बोला हँसकर देवदत्त तब तुम विवाह कर लेना।
लम्बी आयु मिल जाएगी यह मेरा है कहना।।

देवदत्त की बातें सुनकर यज्ञदत्त ने पूछा।
है विवाह का क्या इससे सम्बन्ध न मुझको सूझा।।

देवदत्त बोला शादी के बाद समझ यह आई।
जीवन यह बेकार और लम्बा ही लगता भाई।।

•

## ममापि सन्ति मित्राणि

वर्षत्रये व्यतीते च देवदत्तो यदा गृहे।
विदेशात् तु समायातः तदा स चकितोऽभवत्।।

तस्य पत्नी सुतं चैकं जनयित्वा प्रमोदते।
तदा तन्मानसे शङ्का स्वमित्राणां कृते स्थिता।।

कुपितः स तदा भार्यां पृष्टवान् यद् गृहे मम।
ब्रूहि किं यज्ञदत्तः स आयाति स्म निरन्तरम्?।।

"न हि भो! न स आयाति" इति भार्या यदाऽब्रवीत्।
तदा तु "रामदत्तः किम् आयाति स्म?" स पृष्टवान्।।

देवदत्तवचः श्रुत्वा रोदन्ती सा शनैः शनैः।
तस्य पत्नी तदा तत्र पतिमेवम् उवाच यत्।।

किं तवैवाऽत्र मित्राणि नगरे सन्ति केवलम्।
ममाऽप्यत्र सखायस्तु वसन्ति नगरे न किम्?।।

•

## तदा प्रमत्ततां प्राप्तः?

रजन्यां पौर्णमास्यां च वीक्ष्य चन्द्रमसं यदा।
पत्नी गाम्भीर्यमाधाय पतिमेवम् उवाच यत्।।

पश्य भो! रजनी चेयम् अद्भुता वर्त्तते कथम्?।
प्रमत्ततां तु चेदृश्यां रजन्यां यान्ति मानवाः।।

पत्न्यास्तद्वचनं श्रुत्वा स्मयमानो मुहुर्मुहुः।
व्यंग्यभाव-समापन्नः पतिस्ताम् प्रत्युवाच यत्।।

सत्यं ब्रवीषि भो! देवि! तादृश्यामेव वै निशि।
प्रमत्तीभूय प्रस्तावो विवाहस्य कृतो मया।।

•

# मेरे भी क्या मित्र नहीं हैं?

तीन वर्ष के बाद लौटकर जब आया विदेश से घर में।
देवदत्त तब चकित हो गया हाल देखकर यह अन्दर में।।

उसकी पत्नी की गोदी में एक पुत्र जो ताजा आया।
उसे देखकर मित्रों के प्रति मन मे था सन्देह समाया।।

देवदत्त पत्नी से पूछा पागल होकर यूँ गुस्से में।
क्या आता था यज्ञदत्त वह मेरी अनुपस्थिति में घर में?।।

'नहीं, वह नहीं आता था' जब पत्नी ने उसको बतलाया।
'फिर आता क्या रामदत्त था?' देवदत्त मन में घबड़ाया।।

देवदत्त की बातें सुनकर रोती उसकी पत्नी बोली।
धीरे धीरे इस रहस्य से पर्दे को वह कुछ यूँ खोली।।

क्या केवल कुछ मित्र तुम्हारे ही रहते हैं यहाँ नगर में।
मेरे भी क्या दोस्त न होंगे जो आते रहते इस घर में।।

•

# पागल हुआ तभी मैं

देख क्षितिज में चाँद चमकता पूनम का अति सुन्दर।
पति को व्यक्त किया पत्नी ने हृदय-भाव जो अन्दर।।

पूनम की यह रात देख लो है यह सुन्दर कैसी?।
पागल हो जाते हैं मानव रात देखकर ऐसी।।

पत्नी की बातों को सुनकर मन्द मन्द मुसकाता।
व्यंग्य भाव से पत्नी को तब पति बोला सकुचाता।।

बिलकुल बातें सत्य तुम्हारी ऐसी ही रजनी में।
शादी का प्रस्ताव किया था होकर पागल हमने।।

•

## महामूर्खः पतिर्मम?

वार्त्तालाप-प्रसङ्गे तु पतिः पत्नीमुवाच यत्।
प्रवादो यः श्रुतो लोके तदत्र कथयामि ते।।

येषां तु जनका मूर्खास्तेषामत्र सुता ध्रुवम्।
विद्वांसो बुद्धिसम्पन्ना जायन्ते सर्वदा भुवि।।

परन्तु जनका येषां विद्वांसो बुद्धिमत्तमाः।
पुत्रास्तेषां सदा मूर्खा ज़ायन्ते निश्चितं मतम्।।

पत्युस्तद्वचनं श्रुत्वा पत्नी हास्यपरायणा।
मन्दं मन्दं विहस्याऽथ पतिमेवं ब्रवीति यत्।।

अहो! चिन्ता समाप्ता मे ध्रुवमेव सुता मम।
विद्वांसो बुद्धिमन्तश्च भविष्यन्ति न संशयः।।

•

## कथं यातस्तया समम्?

प्रातः प्रातः समुत्थाय तर्जयन्ती निरन्तरम्।
पत्नी रोषसमाविष्टा पतिमेवम् उवाच यत्।।

ह्यस्तने दिवसे रात्रौ चलचित्रं तु वीक्षितम्।
कथं त्वं प्रतिवेशिन्या समं चित्रालये गतः?।।

पत्न्यास्तद्वाचमाकर्ण्य पतिः शान्तमनास्तदा।
मन्दं विहस्य प्रत्यूचे भार्यामेवम् इदं वचः।।

साम्प्रतं चलचित्राणि परिवारजनैः समम्।
स्थित्वा द्रष्टुं न योग्यानि ततोऽगच्छं तया समम्।।

•

## महामूर्ख पति मेरा?

बातचीत में एक बार पति पत्नी से यह बोला।
जन मन में फैला प्रवाद जो वह रहस्य यूँ खोला।।

सुनते हैं कि जिन बच्चों के मूर्ख पिता होते हैं।
उनके बच्चे बुद्धिमान् विद्वान् सदा बनते हैं।।

किन्तु पिता जिनके होते हैं बुद्धिमान् औ लायक।
उनके बच्चे मूरख होते कामचोर नालायक।।

पति की बातें सुन पत्नी तब मन्द मन्द मुसकाती।
बोल उठी पति से शरमाकर हँसती कुछ इठलाती।।

मैं फिर चिन्तामुक्त हुई अब निश्चित मेरे बच्चे।
निकलेंगे सब बुद्धिमान् विद्वान् और ये सच्चे।।

•

## क्यों मैं उसके साथ गया?

हुआ सबेरा और कुपित पत्नी पति को धमकाती।
भरे रोष में बोल उठी कुछ हाथों को चमकाती।।

अरे! पड़ोसन को संग लेकर लाज न आई जैसे।
कंहो रात को कल तुम देखन गए सिनेमा कैसे?।।

पत्नी की बातों को सुनकर शान्त भाव पति बोला।
मन्द मन्द मुसकाता मन में यूँ रहस्य तब खोला।।

सब लोगों के साथ बैठ परिवार-मध्य अब फिल्में।
नहीं देखने लायक होती गया उसी संग तब मैं।।

•

## चीनजं न दृढं भवेत्

यज्ञदत्तस्य पत्नी या रुचिरा च सुदर्शना।
बभूव चीनदेशीया सुन्दरी कोमलाङ्गिनी।।

दुर्भाग्यं परमेतद् यत् विवाहाऽनन्तरं यदा।
अकस्माद् व्याधिग्रस्ता सा सपद्येव दिवङ्गता।।

सहसा तां मृतां दृष्ट्वा बहुशोक-समन्वितः।
यज्ञदत्तस्तदा सोच्चैः क्रन्दने रोदने रतः।।

क्रन्दन्तं तं तथा वीक्ष्य बहुशोकाकुलं तथा।
देवदत्तः सखा तत्र सान्त्वयन् एवमब्रवीत्।।

वृथा रोदिषि किं मित्र! धैर्यं च धारयस्व भो!।
किमेतदपि नो वेत्सि जनाः सत्यं वदन्ति यत्।।

चीनदेशीय-वस्तूनि समस्तान्येव साम्प्रतम्।
क्षण-भङ्गुररूपाणि भवन्ति न दृढानि च ।।

•

## कृपया देहि मे वधूम्

समलैङ्गिकताकाले घोरे कलियुगेऽधुना।
कथं सन्दिग्धताभावः सम्प्राप्तस्तद् वदाम्यहम्।।

महत् तपः प्रकुर्वाणं देवदत्तं विलोक्य वै।
प्रसन्नस्तपसा तत्र भगवान् एवमाह यत्।।

उत्तिष्ठ भो! प्रसन्नोऽहं पश्य मां समुपस्थितम्।
सन्तुष्टस्तपसा तेऽहं वरं याचस्व चेप्सितम्।।

तत्र तद्वचनं श्रुत्वा देवदत्तः ससम्भ्रमः।
संयोज्य सहसा पाणिम् भगवन्तम् उवाच यत्।।

प्रभो! नाऽहं तथा चास्मि यथा चिन्तयते भवान्।
'वरं' न हि 'वधूम्' एकां कृपया देहि सुन्दरीम्।।

•

# नहीं चीन की सुदृढ़

यज्ञदत्त की पत्नी जो थी सुन्दर और सुदर्शन नारी।
चीन देश की रहने वाली कोमलाङ्गिनी उसकी प्यारी।।

दुःख यही शादी के कुछ दिन बाद न जाने क्या बीमारी।
अकस्मात् मर गई एक दिन व्याधिग्रस्त हो वह बेचारी।।

सहसा उसकी मृत्यु देखकर शोकग्रस्त होकर बेचारा।
यज्ञदत्त जोरों से घर में सेने लगा भाग्य का मारा।।

रोते हुए देखकर उसको ढाढ़स धैर्य बँधाने आया।
देवदत्त जो परममित्र था उसने उसको यूँ समझाया।।

रोते हो बेकार मित्र अब धीरज धारण करो सदा ही।
क्या इतना भी नहीं जानते लोग सदा कहते सच्चा ही।।

चीन देश की सारी चीजें अस्थिर दुर्बल ही बनती हैं।
कोई भी तो नहीं वहाँ की सुदृढ़ और सही रहती है।।

●

# कन्या चाहूँ जीवन में

इस कलियुग में समलैङ्गिकता की जब है चर्चा मानो।
कैसे फिर सन्देह बन रहा अब यह मुझसे जानो।।

देवदत्त तप करने बैठा था जब इस कलियुग में।
हो प्रसन्न भगवान् कह उठे उससे तब जंगल में।।

उठो वत्स! मैं हो प्रसन्न तुमको दर्शन देता हूँ।
इच्छित 'वर' तुम अभी माँग लो यह तुमसे कहता हूँ।।

देवदत्त घबड़ाया थोड़ा और हड़बड़ाकर बोला।
जोड़ तुरत दोनों हाथों को प्रभु समक्ष मुँह यूँ खोला।।

प्रभो! नहीं कुछ वैसा हूँ जो आप सोचते हैं मन में।
मैं कोई 'वर' नहीं चाहता 'कन्या' चाहूँ जीवन में।।

●

## पतिर्मूर्खत्वम् आप्तवान्?

वार्त्तालाप-प्रसङ्गे तु विहसन् पतिरेकदा।
पत्नीं सम्बोधयंस्तावद् वचनं त्वेवमब्रवीत्।।

अरे! किं नैव जानासि रहस्यं चेदमद्भुतम्।
प्रसिद्धं वर्त्तते लाके तदहं प्रब्रवीमि ते।।

मूर्खाणां पुरुषाणां वै पत्न्यस्तु प्रायशः प्रिये?।
सुरूपा दर्शनीयाश्च भवन्तीति सुनिश्चितम्।।

पत्युस्तद् वचनं श्रुत्वा तस्य पत्नी स्मिताननना।
लज्जाभावसमापन्ना वचनं त्वेवम् अब्रवीत्।।

आश्चर्यं न किमप्यत्र मन्ये ब्याजेन साम्प्रतम्।
भवान् मे कुरुते नित्यं प्रशंसामेव सर्वदा।।

•

## न रोचन्ते विवाहिताः

एकदा देवदत्तस्य पत्नी दुःख-समन्विता।
वार्त्तालाप-प्रसङ्गेऽथ पतिम् एवम् उवाच यत्।।

विवाहात् पूर्वमत्र त्वं बहु मानयसे स्म माम्।
परं न ते तथा भावः साम्प्रतं लक्ष्यतेऽधुना।।

विवाहस्य तु पश्चात् त्वं पर्याप्तं परिवर्तितः।
कथमेवम् उदासीनः तटस्थश्च प्रतीयसे?।।

पत्न्यास्तद् वाक्यमाकर्ण्य पूर्वं मौनमुपाश्रयन्।
किञ्चिद् विरम्य पश्चात् स देवदत्तो जगाद यत्।।

अहं तु पूर्वमेव त्वाम् उक्तवान् विस्मृताऽसि किम्?।
विवाहितासु बालासु रुचिर्मे न प्रवर्त्तते।।

•

# पति क्या मूर्ख कहाता?

बातचीत के दौर एक दिन हँसकर पति यह बोला।
पत्नी को सम्बोधित करके यह रहस्य था खोला।।

अरे प्रिये! तुम क्या जानो! यह अद्‌भुत बात बताऊँ।
है प्रसिद्ध जो इस समाज में उसको अब समझाऊँ।।

मूरख बेवकूफ लोगों की अजी! पत्नियाँ संग में।
होती दर्शनीय अति सुन्दर यह प्रसिद्ध है जग में।।

पति की बातें सुनकर पत्नी मन्द मन्द मुसका कर।
बोल उठी तत्क्षण पति से यूँ कुछ लज्जित सी होकर।।

इसमें कोई अचरज की है बात नहीं यह जानूँ।
किसी बहाने सदा प्रशंसा मेरी करते मानूँ।।

•

# नहीं विवाहिता भावे

देवदत्त की पत्नी उससे दुःखी एक दिन बोली।
बातचीत करते चिन्तित हो वह अपना मुँह खोली।।

शादी से पहले तो तुम मुझको थे बहुत रिझाते।
लेकिन क्यों वह भाव नहीं अब सदा उपेक्षा करते।।

तुम विवाह के बाद बहुत बदले बदले दिखते हो।
क्या कारण है अब तटस्थ और उदासीन लगते हो?।।

पत्नी की बातों को सुनकर मौन रहा वह थोड़ा।
कुछ विचार कर देखा सोचा फिर यूँ चुप्पी तोड़ा।।

मैं तो तुमसे पहले भी कहता था तुम शायद भूली।
शादी शुदा लड़कियों में रुचि मेरी कभी नहीं फैली।।

•

## विवाहस्तु तदुच्यते

वार्त्तालाप-प्रसङ्गेऽथ पृष्टवान् पतिरेकदा।
"सम्मोहनम्" इति ब्रूहि वर्त्तते किमिदं प्रिये!।।

पत्युस्तद् वचनं श्रुत्वा व्याख्यां कर्तुं समुत्सुका।
क्षणं विरम्य तद्भार्या प्रत्यूचे तदिदं वचः।।

बलात् नियन्त्रणं कृत्वा हठात् कमपि मानवम्।
मनोऽनुसारं कार्येषु योजनं हि तदुच्यते।।

पत्न्यास्तद् वाक्यमाकर्ण्य पतिस्तां सहसाऽब्रवीत्।
अरे! किं भाषसे मिथ्या 'विवाह' एव किं न तत्?।।

•

## आपणे कुत्र संस्थितः?

आपणे पतिपत्न्यौ तु वियुक्तौ सहसा यदा।
व्याकुला तत्र पत्नी सा चलभाषेण वै पतिम्।।

पप्रच्छ वर्त्तसे कुत्र? कृपया ब्रूहि सत्वरम्।
अहं बहुतिथात् त्वां तु मार्गयामि मुहुर्मुहुः।।

पत्न्यास्तद् वचनं श्रुत्वा पतिः शान्तमनास्तदा।
हट्टे तत्र स्वकीयं स स्थानसङ्केतमाह यत्।।

सुवर्णाभूषणानां च वर्त्तते यस्तु चाऽऽपणः।
बहुधा च त्वया यत्र रुचिः प्रकटिता पुरा।।

पत्युस्तद् वचनं श्रुत्वा मध्य एव प्रहर्षिता।
तस्य पत्नी तदोवाच-"ब्रूहि चाऽग्रे स्मरामि तत्"।।

पुनरग्रे पतिर्ब्रूते - "तदऽऽपण - समीपतः।
प्रिये! सुस्थित एवाऽस्ति केशानां कर्त्तनालयः।।

तत्रैव च निविष्टोऽहं साम्प्रतं कर्त्तनालये।
स्वकेशान् कर्त्तयाम्यत्र शीघ्रमायाहि तत्स्थलम्"।।

•

## वह विवाह कहलावे

बातचीत में पति ने पूछा 'सम्मोहन' क्या होता है?।
इसका अर्थ बताओ मुझको जो भी तुमको आता है।।

पति की बातें सुन पत्नी ने कुछ क्षण रुककर सोचा।
इसका अर्थ बताया यूँ फिर बड़ी गहनता जो सूझा।।

मन मस्तिष्क नियन्त्रित कर जो काम कराया जाता है।
मानव से बलपूर्वक वह सब 'सम्मोहन' कहलाता है।।

पत्नी के उत्तर को सुनकर पति यूँ प्रश्न उठाता है।
अरे! झूठ क्यों बोल रही यह तो 'विवाह' कहलाता है।।

●

## किस दुकान पर बैठा हूँ?

भीड़ भाड़ में पति पत्नी जब अलग हो गए बेचारे।
परेशान पत्नी ने पति को रिंग किया दुःख के मारे।।

पूछ मोबाइल से प्रिय! तुम कहाँ फँसे हो बतलाओ।
खोज रही मैं बड़ी देर से कहाँ खड़े हो समझाओ।।

पत्नी की सुन बात वहाँ पति शान्त भाव से वह भोला।
कहाँ खड़ा बाजार बीच संकेत बताता यूँ बोला।।

सोने के गहनों की जो दूकान कभी तुमने देखी।
कई बार कुछ खरीदने की मन में थी चाहत चोखी।।

पति की इतनी बात अधूरी सुन पत्नी के मन जागे।
हो प्रसन्न बीच में बोली-"याद हमें बोलो आगे"।।

पति ने आगे कहा-"वहीं उस दूकान के पास नई।
बाल काटने की दुकान है उसके संग ही सटी हुई।।

वहीं बैठकर नाई से मैं अपना केश कटाता हूँ।
आ जाओ तुम शीघ्र वहीं पर बैठ प्रतीक्षा करता हूँ"।।

●

## अहमेव परिश्रान्तः

प्रिये! क्वचिद् बहिर्गेहात् गत्वा च भोजनालये।
भोजनं कर्त्तुमिच्छामि तत् प्रयाहि मया समम्।।

पत्युस्तद् वचनं श्रुत्वा पत्नी गन्तुम् अनुत्सुका।
स्वहस्त-निर्मितं भोज्यं प्रदातुं पतिम् अब्रवीत्।।

किमत्राऽनुभवस्येतत् यदहं साम्प्रतं गृहे।
भोज्यं निर्माय निर्माय परिश्रान्ता भवामि किम्?।।

पत्न्यास्तद् वचनं श्रुत्वा पतिर्गम्भीरया गिरा।
व्यंग्य-मिश्रितभावेन तदा तां प्रत्युवाच यत्।।

न हि भो! नैवमस्त्येतत् अहमेव हि साम्प्रतम्।
पात्रं सम्मार्ज्य सम्मार्ज्य परिश्रान्तोऽस्मि सर्वथा।।

•

## तस्य स्थानं श्मशानेऽभूत्!

देवदत्ते मृतेऽकस्मात् तस्य भार्यां यशस्विनीम्।
सुन्दरीं रूपसम्पन्नां यज्ञदत्तस्तु सान्त्वयन्।।

किञ्चिद् गाम्भीर्यम् आधाय दुःख शोक-समन्विताम्।
कोमलेन स्वरेणाऽथ प्रश्नमेवम् उवाच यत् ।।

मित्रस्य मरणं वीक्ष्य हृदि कष्टं तु मे परम्।
किमहं तस्य च स्थानं नेतुं शक्नोमि व न वा?।।

यज्ञदत्तस्य तद् वाक्यं श्रुत्वा शोक-परायणा।
देवदत्तस्य भार्या तु यज्ञदत्तम् उवाच यत्।।

न हि मे काचिद् आपत्तिर्वर्त्तते किन्तु भो! त्वया।
शवदाह-गृहस्याऽत्र प्रष्टव्यास्ते प्रबन्धकाः।।

•

## थक जाता धोते धोते

घर से बाहर निकलें और चलें किसी भी होटल में।
प्रिये! आज भोजन करने की इच्छा है तेरे संग में।।

पति की बातों को सुन बाहर इच्छुक नहीं निकलने को।
घर में भोजन बना स्वयं जो तत्पर उन्हें खिलाने को।।

बोली पत्नी पतिदेव! अरे! क्या अब मैं भोजन बना बना।
थक गई इसी से तुम कहते जो हमको है बाहर खाना?।।

पत्नी की बातों को सुनकर गम्भीर भाव से पति बोला।
कुछ व्यंग्यभाव मुख पर लाकर वह इस रहस्य को यूँ खोला।।

ऐसी तो कोई बात नहीं पर सायं प्रातः यहाँ प्रिये!।
भोजन के जूठे बर्तन को मैं थक जाता धोते धोते।।

•

## श्मशान-मालिक जानें

देवदत्त के अकस्मात् मर जाने पर उसकी पत्नी।
जो सुशील सात्त्विक सुन्दर थी और बहुत ही यशस्विनी।।

कुछ गंभीरभाव धारण कर उसे सान्त्वना सा देता।
कोमल स्वर में यज्ञदत्त ने एक बात यूँ पूछा था।।

मेरे मित्र देवदत्त का मरना निश्चित ही दुःखदायी।
बोलो क्या उसका स्थान मैं ले सकता हूँ भौजाई?।।

यज्ञदत्त की बातें सुनकर शोक दुःख में जो डूबी।
देवदत्त की पत्नी बोली जिसके उत्तर में खूबी।।

नहीं मुझे कोई आपत्ति लेकिन इसके बारे में।
जहाँ जलाया उस स्थान के मालिक मैनेजर जानें।।

•

# यत्कृते त्वधमर्णता

वार्त्तालाप - प्रसङ्गे तु यज्ञदत्तस्त्वथैकदा।
सखायं देवदत्तं सं प्रश्नमेवम् उवाच यत्।।

मित्र-प्रेमिकयोर्मध्ये को भेदो वर्त्तते सखे!।
तदहं ज्ञातुमिच्छामि कृपया ब्रूहि चोत्तरम्।।

तस्य तत्प्रश्नमाकर्ण्य देवदत्तो मुहुर्मुहुः।
किञ्चिद् विचारयंस्तत्र विहसन्नेवम् अब्रवीत्।।

सखा स वर्त्तते यस्तु कदाचिदपि याचिते।
ऋणं दातुं हि सन्नद्धः सर्वदा वर्त्तते सखे!।।

परन्तु प्रेमिका चाऽसौ वर्त्तते यत्कृते भुवि।
ऋणं नीत्वा जनास्तावद् अधमर्णा भवन्ति वै।।

•

# विनाऽपि विषयं वदेत्

एकदा यज्ञदत्तस्तु देवदत्तमुवाच यत्।
पत्नी तस्य सदा सिद्धा भाषणे वर्त्तते यतः।।

विषयं कञ्चिदप्येकम् अधिकृत्य निरन्तरम्।
एकघण्टात्मकं तावद् भाषणं कर्त्तुमर्हति।।

यज्ञदत्तस्य तद्वाचं श्रुत्वा तस्य सखा तदा।
मन्दं मन्दं विहस्यैवं देवदत्तो जगाद यत्।।

परन्तु मम पत्नी तु ततोऽपि कुशला भवेत्।
भाषणे तुल्यता तस्याः कथंचिन्नाऽस्त्यहो! यतः।।

विनाऽपि विषयं सा तु घटीयन्त्रमुपेक्ष्य च।
निरन्तरं सदा सिद्धा भाषणे वर्त्तते सखे!।।

•

## जिसके खातिर कर्जदार हम

बातचीत में यज्ञदत्त ने एक बार यह प्रश्न किया।
अपने बाल सखा से हँसकर सहसा ही यह पूछ लिया।।

मित्र और प्रेमिका बीच क्या भेद हमें बतलाओ।
दोनों में क्या अन्तर है कृपया हमको समझाओ?।।

यज्ञदत्त की बातें सुनकर देवदत्त मुसकाया।
कुछ विचार कर यज्ञदत्त को यूँ धीरे समझाया।।

मित्र वही है सच्चा जानो कभी माँगने पर जो।
देने को उधार तत्पर हो किसी समय भी उसको।।

लेकिन वही प्रेमिका जग में कहलाती है जानो।
जिसके लिए उधार ले बनते कर्जदार हम मानो।।

●

## दिन भर ही बकती है

एक बार यह यज्ञदत्त था देवदत्त से कहता।
मेरी पत्नी की भाषण में देखो सिद्ध निपुणता।।

किसी विषय पर भी वह भाषण तुरत अजी! दे सकती।
और निरन्तर घंटे पर भी रुके बिना कह सकती।।

यज्ञदत्त की बातें सुनकर देवदत्त मुसकाया।
अपनी पत्नी के बारे में उसको यूँ समझाया।।

मेरी पत्नी तो भाषण में उससे अधिक कुशल है।
दोनों की तुलना करना भी यहाँ बहुत मुश्किल है।।

बिना विषय के ही वह भाषण लगातार करती है।
घड़ी देखकर क्या वह बोले दिन भर ही बकती है।।

●

## प्रणमामि सदा गृहे

एकदा देवदत्तस्तु मार्गे गच्छन् ससम्भ्रमः।
गर्दभस्य समक्षं च संयोगात् पतितोऽभवत्।।

तं तथा पतितं वीक्ष्य काचित् तत्रैव संस्थिता।
युवती विहसन्ती सा वाक्यमेवम् उवाच यत्।।

अरे! किं ज्येष्ठभ्रातुस्त्वं समक्षं दण्डवद् भवन्।
मार्गे नमः प्रकुर्वाण आशीर्वादम् अपेक्षसे?।।

युवत्या वचनं श्रुत्वा देवदत्तोऽपि सादरम्।
मन्दं मन्दं विहस्याऽथ युवतीं ताम् उवाच यत्।।

तुभ्यं चाऽपि प्रणामो मे यतो भ्रातुरनन्तरम्।
भ्रातृजायाम् अहं नित्यं प्रणमामि सदा गृहे।।

•

## अनिष्टं नाऽस्तु कस्यचित्

मातुः पार्श्वे चोपविष्टां स्वकीयां कन्यकां यदा।
वार्त्तालाप-प्रसङ्गेऽथ पिता प्रश्नमुवाच यत्।।

अरे! ब्रूहि, इतस्त्वग्रे ज्येष्ठीभूय पुनस्तथा।
किं करिष्यसि संसारे? ज्ञातुमिच्छामि साम्प्रतम्।।

पितुस्तद् वचनं श्रुत्वा बालिका सा ब्रवीति यत्।
विवाहिता भविष्यामि यथेयं जननी मम।।

सुताया वचनं श्रुत्वा पिता तस्यास्तु मातरम्।
दृष्ट्वा मुहुर्मुहुस्तावत् वाक्यमेवम् उवाच यत्।।

कथमत्र ब्रवीष्येवं कस्यचिद् अपि जीवने।
कदाचिदपि चित्तेऽस्मिन् अनिष्टं नैव चिन्तयेः।।

•

## भाभी को प्रणाम मेरा

एक बार जल्दी में चलता देवदत्त घबड़ाकर।
अकस्मात् गिर गया किसी गदहे के आगे जाकर।।

गिरता उसके वहाँ देखकर पास खड़ी इठलाती।
युवती हँसकर बोल उठी यह वाक्य हृदय दुखलाती।।

अरे! बड़े भाई के सम्मुख आदर सहित दण्डवत् करके।
बीच सड़क पर माँग रहे क्या आशीर्वाद यहाँ जी भर के?।।

युवती की इन व्यंग्य युक्त बातें सुन देवदत्त कहता है।
धीरे से मुसकाकर सादर भाव निवेदन यूँ करता है।।

अब प्रणाम आपको हमारा श्रद्धा से आपको नमन।
भाई के तो बाद रोज मैं करता भाभी का वन्दन।।

●

## क्यों अनिष्ट मन से चाहो

आठ सल की बेटी जो संग बैठी थी माता के।
बातचीत में इक सवाल पूछा यूँ तभी पिता ने।।

अरे! बताओ आगे चल जब कभी बड़ी हो जाओगी।
बोलो क्या तुम बनना चाहो? क्या तुम करना चाहोगी?।।

सुनकर बातें बिटिया बोली अपने बापू से मुसकाती।
मैं भी मम्मी के समान ही होकर बड़ी करूँगी शादी।।

कहा पिता ने कुछ मुसकाते बिटिया की बातों को सुनकर।
एक वाक्य यह धीरे धीरे उसकी माता को लक्षित कर।।

ऐसा क्यों कहती हो बिटिया? नहीं किसी के तुम जीवन में।
कोई भी अनिष्ट या कुछ अपकार भावना लाना मन में।।

●

## अहं घण्टाद्वयाद् वच्मि

भोजनं प्राप्स्यते तावत्कदेति पृष्टवान् यदा।
वारद्वयं गृहे भार्यां देवदत्तो बुभुक्षितः।।

देवदत्तवचः श्रुत्वा पत्नी सोच्चैः ब्रवीति यत्।
अहं घण्टाद्वयात् तावद् वच्मि यदिह भोजनम्।।

पञ्चदश-क्षणेनैव प्रापयामि परं मुहुः।
व्यर्थमेव हि क्रुश्यन्ति भवन्तो भोजनाय वै।।

•

## किं व्यवसाय-सन्दर्भे

वाक्कील एकदा कश्चिद् उद्याने भार्यया समम्।
यदाऽभूत् भ्रमणे व्यस्तः कुतश्चित् सहसा तदा।।

सुन्दरी युवती चैका निःसृता तं प्रणम्य च।
मन्दं स्मित्वा ततश्चाऽग्रे निर्जगाम शनैः शनैः।।

तद् दृष्ट्वा तस्य पत्नी तु सन्दिग्ध-हृदया तदा।
पश्यन्ती तत्र सासूयं पतिं वाक्कीलमाह यत्।।

किं भो! चपलतायुक्तां सुन्दरीं तिर्यगीक्षणाम्।
कथं त्वं युवतीमेनां जानासि कथयस्व माम्।।

पत्न्यास्तत् प्रश्नमाकर्ण्य किं-कर्त्तव्य-विमूढधीः।
रक्षात्मकेन भावेन तदा पतिरुवाच यत्।।

किमेवम् इह पृच्छन्ती सन्दिह्यसि वृथा मयि।
व्यवसायस्य सन्दर्भे जानामि तामहं प्रिये!।।

पत्युस्तदुत्तरं श्रुत्वा भार्या रोष-परायणा।
असन्तुष्टा तु वाक्कीलं पुनरेवाह तत्क्षणम्।।

स्वव्यवसाय-सन्दर्भे जानासि युवतीमिमाम्।
तदीय-व्यवसायस्य सन्दर्भे वेत्सि वा वद।।

•

## बोल रही हूँ दो घण्टे से

भूखा देवदत्त बोला पत्नी से मैं भोजन कब पाऊँ?।
आज लगी है भूख जोर से बार बार क्या याद दिलाऊँ।।

देवदत्त की बातें सुन उसकी पत्नी तब यूँ है कहती।
केवल पन्द्रह मिनट लगेगा शीघ्र तुम्हें हूँ भोजन देती।।

यही वाक्य मैं दो घण्टे से बोल रही पर तुम चिल्लाते।
कितनी देर हुई भोजन में व्यर्थ यहाँ जो शोर मचाते।।

●

## अपने या उसके धन्धे से?

किसी पार्क में एक वकील महोदय घूम रहे थे।
अपनी पत्नी के संग प्रातः घर से दूर रहे थे।।

तभी एक सुन्दरी वहाँ मुसकाती युवती आती।
कर प्रणाम धीरे से उनको आगे को बढ़ जाती।।

पत्नी ने यह सब देखा फिर शंकित मन से पूछ लिया।
ईर्ष्या भाव हृदय में जागा पति को आड़े हाथ लिया।।

क्यों जी यह जो अभी गई तिरछी नेत्रों वाली नारी।
कब से इसको जान रहे तुम? है सन्देह मुझे भारी।।

पत्नी की बातों को सुनकर पति वकील है कहता।
व्यर्थ वितण्डावाद टालता यूँ समझाता रहता।।

क्यों बेकार पूछती हो सन्देह व्यर्थ करती हो?।
उसको जानूँ धन्धे से तुम वृथा भाव रखती हो।।

पति की बातें सुन गुस्से में पत्नी यूँ कहती है।
असन्तुष्ट पति के उत्तर से फिर उसको बकती है।।

अपने धन्धे से बोलो तुम उसको जान रहे क्या?।
अथवा उसके धन्धे से उसको पहचान रहे क्या?।।

●

## भार्या चिन्ताप्रदायिनी?

वार्त्तालाप-प्रसङ्गेषु सुस्वास्थ्यम्प्राप्तुम् इच्छुकाः।
जनाः प्रायः इमे केचित् कथयन्ति निरन्तरम्।।

चिन्तामुक्ताः सदा भूत्वा सन्त्रास-रहिता निशि।
शयनं यदि कार्यं चेत् स्वास्थ्यं सुरुचिरं तदा।।

परं कथं न जाने ते निशायां शयनं सदा।
भार्यया सहिता भूत्वा कामयन्ते निरन्तरम्।।

•

## रुचिराः प्रतिवेशिनाम्?

वार्त्तालाप-प्रसङ्गे च यज्ञदत्तमथैकदा।
विहसन् देवदत्तस्तु वाक्यम् एवम् उवाच यत्।।

संसारेऽस्मिन् प्रिया माता प्रत्येकस्य सुतस्य तु।
पार्श्वे एव भवेन्नित्यं सत्यमेतत् सदा मतम्।।

परम् एतन्न जाने मां कथं हि प्रतिभाति यत्।
पत्न्यः प्रियतरा नित्यं सदैव प्रतिवेशिनाम्।।

•

## मूषकात् को बिभेति भो?

कलहे प्रवर्त्तमाने तु पतिः पत्नीम् उवाच यत्।
शान्ता भव न कुर्यास्त्वं वृथा वार्त्ताम् इतः परम्।।

यदि त्वं चैकमप्यत्र शब्दं वक्ष्यसि साम्प्रतम्।
अन्तर्हितःपशुस्तन्मे नूनं जागरितो भवेत्।।

तस्य तद्वचनं श्रुत्वा पत्नी तम्प्रत्युवाच यत्।
भवेद् जागरितः क्षुद्रात् मूषकात् को बिभेति भो!।।

•

## भार्या चिन्तामयी सदा

अच्छा स्वास्थ्य बनेगा कैसे बातचीत में इस पर।
प्रायः लोग कहा करते हैं एक उपाय निरन्तर।।

चिन्ता-मुक्त सदा हो करके और तनाव-रहित हो।
यदि कोई सोता है उसका जीवन स्वास्थ्य-सहित हो।।

किन्तु न जाने लोग सभी जब रात्रि शयन करना चाहें।
पत्नी का सान्निध्य चाहते क्या विडम्बना की राहें।।

## पत्नी पड़ोसियों की अच्छी

बातचीत में एक बार यह देवदत्त यूँ कहता।
यज्ञदत्त से मुसकाकर यह बात सत्य है रखता।।

हर बेटे की प्यारी माता घर में ही होती है।
निःसन्देह बात यह सच्ची सबको ही लगती है।।

किन्तु पत्नियाँ तो पड़ोस की ही प्यारी भाती हैं।
नहीं जानता क्यों मन में ऐसी प्रतीति होती है।।

## चूहे से कौन डरा है?

गरमा गरम बहस में पत्नी से पति का था कहना।
चुप हो जाओ व्यर्थ बात अब कुछ भी तुम्हें न करना।।

यदि अब कुछ भी बोलोगी तुम एक शब्द भी मुझसे।
मुझमें बैठा हुआ जानवर जाग उठे तत्क्षण से।।

पति की बातें सुन पत्नी का उत्तर यही धरा है।
जगता हो तो जग जाए चूहे से कौन डरा है?।।

# पत्नी शान्तिं प्रदास्यति

एकदा देवदत्तस्तु साधुमेवम् उवाच यत्।
गुरो! दुःखेन सन्तप्तः संसारे जीवितोऽस्म्यहम्।।

उपायः कथ्यतां कश्चिद् येनाऽहं जीवने सदा।
प्रभो! सुखं तथा शान्तिं प्राप्नवानि निरन्तरम्।।

देवदत्तस्य तत्प्रश्नं श्रुत्वा सावहितस्तदा।
किञ्चिद् विचारमग्नः स साधुरेवम् उवाच यत्।।

जीवनेऽस्मिन् न सन्देहः सत्यमेव वदामि यत्।
सुखं तु प्राप्स्यसे पुत्र! यावत् पुण्यं त्वया कृतम्।।

शान्तिं च तावतीमेव प्राप्स्यसे शृणु ध्यानतः।
यावतीं तव पत्नी ते प्रदानाय समीहते।।

•

# पतिरेव पराजितः?

यज्ञदत्तः स्वकीयां वै व्यथां वक्तुं समुद्यतः।
सखायं देवदत्तं स त्वेवं वचनमाह यत्।।

ह्यस्तने दिवसे रात्रौ मम पत्न्या समं महान्।
कलहः सम्प्रवृत्तोऽभूत् तेनाऽहं दुःखितः सखे!।।

तस्य वाक्यं समाकर्ण्य देवदत्तस्तु पृष्टवान्।
कलहस्य च किं तत्र कारणं कथयस्व माम्।।

यज्ञदत्तस्तदा ब्रूते गृहेऽहं दूरदर्शने।
क्रिकेट-क्रीडनं द्रष्टुम् इच्छामि स्म परन्तु सा।।

चलचित्रं तदा द्रष्टुम् आग्रहं कुरुते ततः।
कलहः सम्प्रवृत्तश्च मम गेहे शनैः-शनैः।।

यज्ञदत्तवचः श्रुत्वा देवस्तं प्रश्नमाह यत्।
अस्तु ब्रूहि कथं चाऽऽसीत् चलचित्रं च तत्सखे?।।

•

## शान्ति सदा पत्नी पर निर्भर

देवदत्त ने एक बार इक साधू से यूँ पूछा।
बाबा बोलो दुःखी विश्व में क्या जीने की इच्छा?।।

कोई आप उपाय बतायें मैं भी इस जीवन में।
शान्ति प्राप्त कर उड़ता जाऊँ सुख के नील गगन में।।

देवदत्त की बातें सुनकर ध्यानमग्न बाबा जी।
कुछ विचार कर देवदत्त से कहते यही सुनो जी।।

निश्चित तुम जीवन में सुख को पाओगे उतना ही।
पुण्य कमाओगे अपने जीवन में तुम जितना ही।।

सुनो ध्यान से सत्य बताता शान्ति मिले पर उतनी।
पत्नी तुमको देना चाहे जीवन में वह जितनी।।

●

## पति ही हारा होगा

अपने दुःख को यज्ञदत्त जब कहने को तैयार हुआ।
देवदत्त से व्यथित-हृदय होकर उसने यह वचन कहा।।

विगत रात्रि को मेरा पत्नी के संग एक विवाद हुआ।
उसी कलह के कारण मेरे मन में दुःख अपार हुआ।।

यज्ञदत्त की बातें सुनकर देवदत्त ने पूछ लिया।
बतलाओ क्या कारण था जो घर में ऐसा कलह किया?।।

देवदत्त का प्रश्न सुना तब यज्ञदत्त यह कहता है।
घर में कलह हुआ जो भारी कारण वह बतलाता है।।

मैं क्रिकेट का मैच देखना चाह रहा था टी०वी० पर।
भूत चढ़ा था फिल्म देखने का तब मेरी बीबी पर।।

बातें सुन तब यज्ञदत्त की देवदत्त ने यह पूछा।
अच्छा बोलो फिल्म लगी वह कैसी तुमने जब देखा?।।

●

## भिक्षुकाय कथं ददे?

प्रत्यहं भिक्षुकाय त्वं ददासि भोजनं कथम्?।
अनेन तव को लाभः कथमेवं करोषि च?।।

पत्युस्तद् वचनं श्रुत्वा शान्तेन मनसा तदा।
पत्नी गाम्भीर्यमाधाय पतिम् एवम् उवाच यत्।।

परिश्रमेण यस्तावत् निर्मितं मम भोजनम्।
विना निन्दां परिगृह्णन् तथा चाऽऽलोचनां विना।।

कश्चित्तु वर्त्तते लोके सहर्षं यो भुनक्ति तत्।
विचार्य सर्वमेतद् हि भिक्षुकाय ददाम्यहम्।।

•

## ममाऽपि परिहासोऽयम्

कार्यालयात् समागत्य देवदत्तो यदा गृहे।
सम्प्रविष्टस्तदा तस्य भार्या तं निजगाद यत्।।

अद्य भो! न समीचीनं मम स्वास्थ्यं तु वर्त्तते।
न चाऽद्य रोचते किञ्चित् उत्साहोऽपि न मानसे।।

पत्न्यास्तद् वचनं श्रुत्वा देवदत्तोऽपि चिन्तितः।
किञ्चिद् विरम्य भार्यां स एवं वचनमाह यत्।।

प्रिये! मेऽद्य विचारोऽभूद् यद् गत्वा भोजनालये।
भोक्ष्यामहे बहिस्तद् वै निरस्तं सर्वमप्यहो!।।

देवदत्तस्य तद् वाक्यं श्रुत्वा पत्नी ब्रवीति यत्।
अरेऽहं सर्वथा स्वस्था परिहासेऽवदं तदा।।

पत्न्यास्तद् वाक्यमाकर्ण्य देवदत्तोऽपि सस्मितः।
मन्दं मन्दं विहस्याऽथ भार्याम् एवं जगाद यत्।।

प्रिये! त्वं भोजनं शीघ्रं निर्मापय गृहेऽधुना।
भोजनालय-चर्चाऽपि परिहासे कृता मया।।

•

## भिक्षुक को क्यों देती हूँ?

रोज रोज तुम भिखमंगे को भोजन क्यों दे देती हो?
इसका क्या है लाभ यहाँ जो सदा यही तुम करती हो।।

पति की इन बातों को सुनकर शान्त भाव पत्नी बोली।
होकर कुछ गंभीर भाव से इस रहस्य को यूँ खोली।।

इतनी मेहनत से भोजन मैं प्रतिदिन यहाँ बनाती हूँ।
मीन-मेख निन्दा सुनकर भी तुमको रोज खिलाती हूँ।।

लेकिन भिक्षुक को मैं देती सदा सोचकर बात यही।
मीन-मेख के बिना खुशी से तो कोई खा रहा सही।।

●

## मैंने भी मजाक में कह दी

ऑफिस से जब देवदत्त थक करके था घर में आया।
घर में घुसते ही पत्नी ने उसको कुछ यूँ समझाया।।

आज नहीं मेरी तबियत कुछ स्वस्थ यहाँ लगती है जी।
नहीं लगे अच्छा मन में कुछ भी उत्साह नहीं है जी।।

पत्नी की बातों को सुनकर देवदत्त चिन्तित बोला।
रुककर थोड़ा कुछ विचार करके अपने मुँह को खोला।।

प्रिये! आज मेरा विचार था जाकर अच्छे होटल में।
बाहर खाना खाएँगे पर अब तो खाना हो घर में।।

पति की बातें सुनकर वह फिर पत्नी उससे यह बोली।
यह सब तो मैंने मजाक में कहा भली हूँ मैं चंगी।।

पत्नी की बातों को सुनकर देवदत्त हँसकर बोला।
मन्द मन्द मुसकाता मन में धीरे से यूँ मुँह खोला।।

प्रिये! बनाओ खाना घर में शीघ्र मुझे है भूख लगी।
मैंने भी होटल की बातें थी मजाक में ही कह दी।।

●

# साप्तपदीनं सख्यम्

भार्यां नवोढां पतिराह धृष्टः,
गोप्यं न किञ्चिन्मम ते पुरः स्यात्।
अतो ब्रवीम्यत्र तु सत्यमेव,
अनेक - नारी - व्यसनं पुरा मे।।

तथा प्रवृत्तिर्यदि तेऽपि काचित्,
बभूव तद् वक्तुमिहाऽर्हसि त्वम्।
न चाऽऽवयोर्मध्य इहाऽस्तु किञ्चित्,
गोप्यं न वेतः परमस्त्वगोप्यम्।।

पत्युस्तथा तद्वचनं निशम्य,
नत्वा शिरः साऽपि विहस्य मन्दम्।
सुस्पष्टमेतद् वचनं सलज्जम्,
जगाद विश्वस्तधिया नवोढा।।

सम्मेलनेनाऽत्र विना गुणानाम्,
स्वभाववृत्तिं च तथाऽसमीक्ष्य।
प्रवर्त्तते नैव तु नः कुटुम्बे,
विवाहकार्यं सुविशिष्टमेतत्।।

भार्या सखा स्यात् प्रथमा नराणाम्,
सख्यं जनाः साप्तपदीनमाहुः।
समान एवाऽस्ति गुणो यतो नः,
"समान - शील - व्यसनेषु सख्यम्"।।

•

# पुरुष मित्र मेरे भी थे

कहा नवेली पत्नी से जब पति ने बड़ी ढिठाई से,
हम दोनों के बीच गुप्त हो कुछ भी ना चतुराई से।
इसीलिए मैं सच कहता हूँ नहीं छिपाऊँगा तुमसे,
रहा निकट सम्बन्ध हमारा पहले भी महिलाओं से।।

यदि कुछ ऐसी बात रही हो कभी तुम्हारे जीवन में,
तुम भी मुझे बता सकती हो बुरा नहीं मानूँ मन में।
नहीं चाहता हम दोनों के बीच यहाँ कुछ गुप्त रहे,
खुला सदा ही दिल दिमाग हो हम दोनों विश्वस्त रहें।।

पति की ऐसी बातें सुनकर नई नवेली सकुचाई,
मन्द मन्द मुसकाई मन में झुका हुआ सिर दिखलाई।
फिर कुछ लज्जा भाव समेटे लेकर के विश्वास नया,
सीधे और सपाट रूप में पति को यही जवाब दिया।।

बिना मिलाये गुण कर्मों को और बिना स्वभाव जाने,
बिना विचारे नहीं हमारे घर होता विवाह मानें।
यह कुटुम्ब की परम्परा है पूर्वकाल से बनी रही,
सब कुछ ठीक मिलाकर होती शादी सबकी सही सही।।

भार्या प्रथम सखा होती है शास्त्र यही बतलाता है,
साथ सात पग भी चल लो तो मित्र वही कहलाता है।
हम दोनों का यह स्वभाव तो बिलकुल ठीक ठीक मिलता,
यदि समान हो शील व्यसन तो सखा भाव जिन्दा रहता।।

●

# त्वामेव नयतां यमः

रुग्णस्य देवदत्तस्य विष्टरे पतितस्य च।
जीवनस्य तु नैवाऽऽसीत् काचित् संभावना यदा।।

योग्यैश्चिकित्सकैश्चाऽपि विषये जीवनस्य च।
निराशभावमापन्नैः शङ्का प्रकटिता यदा।।

देवदत्तस्तदा तत्र परिहास-प्रियः सदा।
मन्दं मन्दं विहस्याऽथ भार्याम् एवम् उवाच यत्।।

त्वं सुन्दराणि वस्त्राणि सुवर्णाऽऽभूषणानि च।
सज्जावस्तूनि चाऽन्यानि परिधाय प्रिये! स्वयम्।।

त्यक्त्वा सर्वं विषादं च सहर्षं सुस्मितानना।
तिष्ठ भो! कृपया देवि! सान्निध्ये मे निरन्तरम्।।

देवदत्तस्य तद्वाचं श्रुत्वा कोप-परायणा।
भर्त्सयन्ती तदा तत्र तस्य पत्नी जगाद यत्।।

किं वृथा भाषसे चैवं नाऽयम् अवसरस्तथा।
सज्जाया वर्त्तते कश्चित् यथा चिन्तयते भवान्।।

भार्याया वचनं श्रुत्वा देवदत्तः स्मिताननः।
किञ्चिद् विहस्य तत्रैवं वचनं तां तदाऽब्रवीत्।।

प्रिये! मम मनोभावं न त्वं ज्ञातुम् इह क्षमा।
तदेवं कथयाम्यत्र रहस्यम् इह चाऽस्ति यत्।।

यमराजो यदा नेतुम् माम् अत्रोपस्थितो भवेत्।
सौन्दर्यं ते तदा वीक्ष्य मुग्धश्चेह तथा भवेत्।।

यथा स मां परित्यज्य तव सौन्दर्य-मोहितः।
यमलोके च त्वाम् एव नीत्वा स प्रस्थितो भवेद्।।

•

# यम तुमको ले जावें

घोर रुग्ण हो देवदत्त जब बिस्तर में था पड़ा हुआ।
क्षीण हुई जीवन की आशा और मृत्यु से अड़ा हुआ।।

योग्य डाक्टरों ने भी उसके जीवन की छोड़ी आशा।
हो निराश उसके जीवन में बची न कुछ भी अभिलाषा।।

एक दिवस वह मनमौजी पत्नी के मानस को तोला।
फिर रहस्यमय ढंग से वह धीरे से मुँह कुछ यूँ खोला।।

सुन्दर अच्छे गहने पहने और वस्त्र धारण कर तू।
कर सोलह श्रृङ्गार सदा ही बनी ठनी बैठाकर तू।।

सारी चिन्ता और परेशानी भी सब कुछ तजकर।
हँसते मुसकाते संग मेरे सुख से सदा रहाकर।।

पति की ऐसी बातें सुनकर क्रोध सहित वह भोली।
धमकी देती सी गुस्साती देवदत्त से बोली।।

उट पटाँग तुम क्या बकते हो नहीं समय यह कहने का।
यह अवसर भी नहीं कभी मेरे श्रृंगार को करने का।।

पत्नी की बातों को सुनकर देवदत्त तब बोला।
नहीं जानती क्या रहस्य है इसमें फिर मुँह खोला।।

प्रिये! नहीं तुम जान सकी आशंकाओं का क्या डेरा?।
यहाँ रहस्य बताता हूँ अब मनोभाव जो मेरा।।

देवि! यहाँ जब आएँगे यमराज प्राण हरने को।
मुग्ध तुरत हो जायें लख के तेरी सुन्दरता को।।

फिर वह मेरा प्राण छोड़कर तुम पर होकर मोहित।
ले जाएँ यमलोक तुम्हें ही हो जाये मेरा हित।।

## त्वदुच्छिष्टं विषम्पेयम्

कलहे प्रवर्त्तमानेऽथ पत्नी पतिम् उवाच यत्।
ब्रूहि त्वं तु मया सार्धं कियत् प्रेम करोषि भो!।।

पत्न्याः प्रश्नं समाकर्ण्यं बहु-रोष-समन्वितः।
तदीय - व्यवहारेण क्षुब्धः पतिरुवाच यत्।।

अहं तथाविधं तावत् प्रेम कुर्वे त्वया समम्।
त्वदुच्छिष्टं विषं चाऽपि पातुं शक्नोमि सर्वथा।।

शङ्काऽपि नाऽत्र कर्त्तव्या सत्यमेतद् वदामि च।
विश्वासो यदि नैव स्यात् तत् परीक्षितुमर्हसि।।

•

## शुश्रूषा सुखदा कथम्?

काचिद् नववधूस्तावत् श्वश्रू-सेवा-परायणा।
स्वसेवाभावनां तावत् संद्योतयितुम् इच्छुका।।

श्वशुरालये समागत्य यच्चकार तदद्भुतम्।
निन्दार्हं वा प्रशंसार्हम् एतद् ज्ञातुं न हि क्षमः।।

रात्रौ द्विवादने श्वश्रूं सर्वथाऽऽरामपूर्वकम्।
सुखेनाऽथ शयानां सा पर्यङ्के गाढनिद्रया।।

यदा चोत्थापयामास रुष्टा श्वश्रूस्तक्रदैव ताम्।
निद्राभङ्गेन क्षुब्धा सा वधूं पप्रच्छ कारणम्।।

श्वश्र्वाः प्रश्नं समाकर्ण्य सा कर्त्तव्य-परायणा।
नवोढा स्मयमाना सा श्वश्र्वाः पाणौ तु सत्वरम्।।

यच्छन्ती गोलिकामेकां जलपात्रं च तत्क्षणम्।
प्रस्तुतं कुर्वती तावत् श्रद्धया ताम् उवाच यत्।।

निद्राया गोलिकामेताम् अगृहीत्वैव वै निशि।
कथं सुप्तवती मातः! तत् स्मृत्वा दातुम् आगता।।

•

## जूठा जहर अभी पी जाऊँ

एक बार झगड़े में पत्नी यूँ पति से कहती है।
कितना प्रेम हमारे संग तुम करते हो? बकती है।।

पत्नी की बातों को सुनकर पति गुस्से से बोला।
क्षुब्ध आचरण से उसके उसने भी यूँ मुँह खोला।।

इतना प्रेम तुम्हें करता मैं तुमको क्या बतलाऊँ।
तेरा झूठा पिया जहर भी मैं तत्क्षण पी जाऊँ।।

यदि कोई सन्देह यहाँ तो कर लो अभी परीक्षण।
सच कहता हूँ नहीं हटूँगा पीछे अजी! किसी क्षण।।

•

## ऐसी सेवा क्या सुखदायी?

बहू नई नवेली कोई सेवा-भाव दिखाती।
करती हुई सास की सेवा देखो क्या सिखलाती।।

आकर के ससुराल किया जो अद्‌भुत सेवा उसने।
वह स्तुत्य या निन्दनीय था यह न जाना हमने।।

गहरी निद्रा में जब उसकी सास सो रही सुख से।
रात दो बजे उसे उठाकर था कहना कुछ उससे।।

टूटी गाढ़ी नींद सास की क्षुब्ध भाव से पूछी।
इतनी रात जगाया क्यों है? क्या है तुमको सूझी।।

प्रश्न सास का सुनकर वह कर्त्तव्य-निष्ठ अलबेली।
बहू हाथ में गोली देकर हँसती हुई नवेली।।

श्रद्धा-सेवा-भाव समर्पित कैसी थी वह भोली।
एक ग्लास पानी भी संग में प्रस्तुत करती बोली।।

आप रात सो गईं बिना ही लिए नींद की गोली।
माँ जी! उसे याद कर आई मैं देने वह गोली।।

•

## सी-डीम् आलोक्य रोदिमि

दूरदर्शन-साम्मुख्ये पतिम् उद्विग्नमानसम्।
रुदन्तं संस्थितं दृष्ट्वा भावुकं करुणान्वितम्।।

पत्नी तीक्ष्ण-स्वभावा सा पतिम् एवम् उवाच यत्।
मन्ये करुणया पूर्णं धारावाहिकम् अद्भुतम्।।

विलोकयन् कमप्यत्र दयया पूरितो भवन्।
सुकोमल-स्वभावत्वात् अश्रुपूर्णोऽसि साम्प्रतम्।।

तस्यास्तद् वचनं श्रुत्वा पतिः संक्षुब्धमानसः।
भार्याम् आग्नेयनेत्राभ्यां पश्यन् एवं ब्रवीति यत्।।

न धारावाहिकं कञ्चित् पश्यामि स्वस्य वै परम्।
चित्राङ्कनं (सी०डी०) विवाहस्य दृष्ट्वा रोदिमि रोदिमि।।

•

## भानुतुल्या भवेद् भार्या

वार्त्तालाप - प्रसङ्गेऽथ यज्ञदत्तस्त्वथैकदा।
सुहृदं देवदत्तं तु प्रश्नमेवं जगाद यत्।।

भार्या-भास्करयोर्मध्ये किं साम्यं ते प्रतीयते?।
तदहं ज्ञातुमिच्छामि कृपया ब्रूहि चोत्तरम्।।

यज्ञदत्तस्य तत्प्रश्नं श्रुत्वा च सस्मिताननः।
देवदत्तः सखा तस्य प्रश्नस्योत्तरमाह यत्।।

साम्यं मम विचारेण यदेकं वर्त्तते सखे!।
तदहं प्रब्रवीम्यत्र कृपयां श्रृणुतां भवान्।।

यथा चंक्षूषि विस्फार्य सूर्यो द्रष्टुं न शक्यते।
भार्यामपि तथा कश्चिद् द्रष्टुं शक्नोति नो नरः।।

•

## सी०डी० देख रो रहा हूँ

टी०वी० के आगे घबराए परेशान पति को रोते।
देखा भावुक होते एवं करुणा से पूरित होते।।

तेज स्वभावों वाली पत्नी बोली पति से यों जाकर।
लगता है यह कोई धारावाहिक देख रहे प्रियवर!।।

शायद इस धारावाहिक में दयापूर्ण घटना कोई।
भरी हुई है जिसमें आँखे यहाँ आपकी हैं रोई।।

पत्नी की बातों को सुनकर क्षुब्ध भाव पति कहता है।
आँखों से हो आग बबूला उस पर वहीं बरसता है।।

कोई धारावाहिक जैसा देख रहा ना टी०वी० पर।
मैं अपने विवाह की सी०डी० देख रहा हूँ रो रोकर।।

•

## भार्या सूर्य-समाना

बातचीत में एक बार श्रीयज्ञदत्त हँसते हँसते।
मित्र देवदत्त से पूछा एक प्रश्न यह धीमे से।।

पत्नी और कहो सूरज के बीच अजी! क्या समता है?।
यही जानना चाह रहा तेरा दिमाग क्या कहता है?।।

यज्ञदत्त का सुन सवाल तब देवदत्त मुसकाता है।
कुछ विचार कर इसका उत्तर धीरे यूँ बतलाता है।।

मुझे एक ही समानता दोनों के बीच समझ आती।
उसे ध्यान से सुनो कह रहा हूँ जो मेरे मन भाती।।

आँख फाड़कर कोई ज्यों सूरज को देख नहीं सकता।
वैसे ही पत्नी को कोई आँख तरेर नहीं सकता।।

•

## सद्यः पत्नी न लप्स्यते

प्राप्तवन्तं यदा कञ्चित् मृत्योर्दण्डमथैकदा।
काराऽध्यक्षोऽब्रवीद् एवम् अपराधिनमत्र यत्।।

अरे! गलाऽर्गलात् (फांसी) पूर्वं कं त्वं मेलितुमिच्छसि?
तदहं ज्ञातुमिच्छामि कृपया ब्रूहि सत्वरम्।।

काराऽध्यक्षस्य तद्वाक्यं श्रुत्वाऽसौ तमुवाच यत्।
पत्नीं सङ्गन्तुमिच्छामि प्रबन्धः क्रियतां ततः।।

तस्य तद्वचनं श्रुत्वा काराऽध्यक्षो ब्रवीति यत्।
मातरं पितरं किं न मेलितुं त्वं समीहसे?।।

तस्य तद्वचनं श्रुत्वा कराऽध्यक्षस्य वै तदा।
विहसन्नपराधी स वाक्यमेवम् उवाच यत्।।

जन्म-ग्रहणकालेऽहम् अग्रिमे पितरौ स्वतः।
प्राप्स्यामि नूतनौ शीघ्रं निःसंशयमिदं परम्।।

एकविंशति-वर्षेषु व्यतीतेषु च जन्मनः।
वयस्कतायां प्राप्तायां पत्नी प्राप्ता भविष्यति।।

•

## साम्प्रतं किं न रोदिमि?

समाप्ते कलहे जाते पत्नी पतिमथैकदा।
कोमलेनाऽथ भावेन प्राह करुणया गिरा।।

दिवङ्गता भविष्यामि यद्यहं ब्रूहि तद् भवान्।
रोदिष्यसि न वा तत्र ज्ञातुमिच्छामि ते मनः।।

तस्यास्तद् वचनं श्रुत्वा पतिः संक्षुब्धमानसः।
गम्भीरेणाऽथ भावेन पत्नीं पश्यन् ब्रवीति यत्।।

मृतायां किं भवेत् तावत् प्रश्नः काल्पनिकस्तु सः।
परं विचारयेस्तावत् साम्प्रतं विहसामि किम्?।।

•

## पत्नी शीघ्र न पाऊँ

मृत्यु-दण्ड पाए व्यक्ति से एक बार जेलर ने।
पूछ लिया नियमानुसार ही उस अपराधी नर से।।

फाँसी से पहले बोलो तुम किससे मिलना चाहो।
यही जानना चाह रहा तुम उसका नाम बताओ।।

वह अपराधी सुनकर बोला जेलर की यूँ बातें।
पत्नी से मिलने की कृपया आप व्यवस्था कर दें।।

अपराधी की इच्छा सुनकर जेलर ने तब पूछा।
मात-पिता से मिलने की क्या तुम्हें नहीं है इच्छा?।।

जेलर का यह प्रश्न सुना तब वह अपराधी हँसकर।
कुछ विचार करता दे डाला तत्क्षण ही यह उत्तर।।

अगला जन्म मिलेगा ज्यों ही तत्क्षण मात-पिता को।
नया तुरत मैं पा जाऊँगा यहाँ न संशय हमको।।

लेकिन लूँगा जन्म और जब बालिग हो जाऊँगा।
पत्नी तो इक्कीस वर्ष के बाद ही मैं पाऊँगा।।

●

## अभी नहीं क्या रोता?

पति-पत्नी में आपस का जब झगड़ा खत्म हुआ था।
पत्नी ने पति से कोमलता-पूर्वक यह पूछा था।।

यदि मैं मर जाऊँ तो बोलो एक बात बतलाना।
रोओगे या नहीं? जानना चाहूँ सत्य बताना।।

उसकी बातें सुनकर पति तब क्षुब्ध-हृदय कुछ तोला।
फिर गम्भीर भाव धारण कर पत्नी से यह बोला।।

मरने पर क्या होगा यह तो प्रश्न काल्पनिक पूरा।
सोचो अब क्या हँसता हूँ मैं, जीवन नहीं अधूरा?।।

●

## उभयोः साधना कला

विवाहित-नराणां च सभायामथ चैकदा।
कश्चिद् दार्शनिकस्तावद् ब्रूते प्रवचने त्विदम्।।

समय-यापनं मन्ये भार्यया सार्धमत्र वै।
जीवनस्य महानेष भागः प्रवर्तते सदा।।

परन्तु प्रेमिका यस्य भार्या चाऽपि भवेत् तथा।
सान्निध्यम् उभयोर्नित्यं वर्त्तते चाऽत्र जीवने।।

उभाभ्यां च समं तावत् समय-यापनं तथा।
जीवनस्य कला चैषा महती वर्त्तते भुवि।।

•

## विवाह-बन्धं सुखदं न मन्ये?

विवाहो यज्ञदत्तस्य दिनाङ्के दशमे यदा।
सुनिश्चितस्तदा तत्र दिनाङ्के नवमे शुभे।।

देवदत्तः समागत्य यज्ञदत्तस्य वेश्मनि।
किञ्चित् स्मयमानस्तु यज्ञदत्तं ब्रवीति यत्।।

अद्य ते जीवनस्याऽस्ति दिवसः सर्वतोऽधिकः।
प्रसन्नताप्रदस्तस्माद् द्रष्टुमत्र समागतः।।

देवदत्तस्य तद्वाक्यं श्रुत्वा तु विस्मिताननः।
यज्ञदत्तः सखायं स्वं देवदत्तम् उवाच यत्।।

परं मम विवाहस्तु श्वस्तने दिवसे मतः।
मन्ये त्वं विस्मृतोऽस्यद्य दिनाङ्को नवमः सखे!।।

यज्ञदत्तस्य तद्वाक्यं श्रुत्वा स्मरेमुखस्तदा।
देवदत्तो विहस्यैवं यज्ञदत्तं ब्रवीति यत्।।

जानामि मित्र! जानामि तस्मादेव ब्रवीमि यत्।
महा-हर्षप्रदोऽद्यैव जीवने दिवसोऽन्तिमः।।

•

## कौन साधता दोनों को?

शादी शुदा मानवों की जो सभा चल रही थी प्यारी।
कहा किसी दार्शनिक व्यक्ति ने बात एक बिल्कुल न्यारी।।

यही मानता हूँ जीवन में जो था मेरे भाग पड़ा।
पत्नी के संग समय काटना जीवन का सौभाग्य बड़ा।।

लेकिन जिस मानव के पत्नी और प्रेमिका दोनों हैं।
दोनों का सान्निध्य सदा दैनन्दिन के जीवन में है।।

पर दोनों संग समय बिताना फूल खिलाना परती में।
जीवन की यह बहुत बड़ी है कला समझ लो धरती में।।

•

## आज खुशी का अन्तिम दिन

यज्ञदत्त का निश्चित था विवाह माह के दसवें दिन।
लेकिन देवदत्त उसके घर बोल रहा आ नौवें दिन।।

आज तुम्हारे जीवन का यह शुभ दिन कैसा आया है।
सबसे ज्यादा खुशी आज के दिन की है क्या माया है।।

इसीलिए आज ही बधाई तुमको देने आया हूँ।
और तुम्हें देने फूलों का गुलदस्ता भी लाया हूँ।।

देवदत्त की बातें सुनकर यज्ञदत्त अचरज करता।
सुन उसकी बातें विस्मित हो एक वाक्य फिर यूँ कहता।।

लगता है तुम भूल गए हो आज विवाह नहीं मेरा।
आज नवीं तारीख अभी है दस को शादी का फेरा।।

यज्ञदत्त की बतों सुनकर देवदत्त कुछ मुसकाया।
हँसकर बोला यज्ञदत्त से कुछ रहस्य यूँ समझाया।।

मित्र जानता हूँ मैं भी यह इसीलिए तो कहता हूँ।
आज तुम्हारी खुशियों का मैं अन्तिम दिवस समझता हूँ।।

•

## तद्दिने श्वेत-शाटिका

प्रत्यहं शाटिकानां च वस्त्राणां चाऽपि याच्ञया।
क्षुब्धः पतिरुवाचैवं गृहे पत्नीम् अथैकदा।।

निरन्तरं तवाऽऽभिश्च याच्ञाभिः परिपीडितः।
आत्महत्यां चिकीर्षामि न च शान्तिं लभे यतः।।

पत्युस्तद् वचनं श्रुत्वा पत्नी धैर्यसमन्विता।
शान्तेन मनसा तावत् पतिम् एवमुवाच यत्।।

अस्तु त्वं सुन्दरीम् एकां कौशेयीं श्वेतशाटिकाम्।
दिने त्रयोदशाहस्य परिधानार्थमेव मे।।

क्रीत्वा पूर्वं समायाहि ततो निश्चिन्तमानसः।
आत्म-हत्या-विचारं स्वं सम्पादयितुम् अर्हसि।।

•

## शीघ्रं याहि प्रसूगृहे

पत्युः शिरोरुहाणां च पतनं वीक्ष्य वै मुहुः।
पत्नी व्यंग्येन भावेन पतिमेवम् उवाच यत्।।

यदि ते शिरसः केशाः पतेयुरेवमेव भो!।
खल्वाटं त्वां परित्यज्य प्रस्थास्ये जननी-गृहे।।

तस्यास्तद् वचनं श्रुत्वा पतिराश्चर्यमिश्रितम्।
हृष्टता-भावमाधाय पत्नीम् एवं ततोऽब्रवीत्।।

शृणु भो! मूर्ख एवाऽसम् अद्याऽवधि त्वहं यतः।
केश-पात-निरोधार्थम् उपायाऽन्वेषणे रतः।।

•

## बड़े प्रेम से पहनूँगी

रोज रोज साड़ी कपड़ों की माँग सुनी पत्नी की।
एक बार हो परेशान पति बोला घर में सनकी।।

शान्ति नहीं जीवन में कुछ भी तंग हुआ फरमाइश से।
चाह रहा जी करूँ आत्महत्या मैं इसी नुमाइश से।।

पति की बातें सुन धीरज से शान्त-भाव पत्नी बोली।
गुस्सा नहीं किया कुछ भी पर धीरे से यूँ मुँह बोली।।

खैर तुम्हारी सुन ली बातें ध्यान एक बात रखना।
साड़ी एक सफेद रेशमी मरने से पहले लाना।।

क्योंकि मृत्यु के बाद तुम्हारे जब भी तेरहवीं होगी।
उस दिन मैं उस साड़ी को ही बड़े चाव से पहनूँगी।।

•

## जाओ माँ के घर में

पति के सिर के बालों को झड़ते कम होते जब देखा।
व्यंग्य भाव से पत्नी बोली कर माथे चिन्ता-रेखा।।

गिरते रहे निरन्तर ही यदि बाल तुम्हारे सिर के।
गंजे हो जाओगे तुमको छोड़ चलूँगी मैके।।

पत्नी की बातें यूँ सुनकर पति अचरज करता है।
हो प्रसन्न अतिशय पत्नी से मुसकाकर कहता है।।

बेवकूफ था अब तक जो बालों को सदा सोचता था।
इन्हें बचाने हेतु सदा ही व्यर्थ उपाय खोजता था।।

•

## प्रविशेयं गृहे तदा

विलम्बात् तु समायातं गृहे पतिमथैकदा।
प्राह पत्नी यदद्य त्वं बहुरात्रौ समागतः।।

तस्यास्तद् वचनं श्रुत्वा पतिस्ताम् एवमाह यत्।
त्वमप्यद्य प्रतीक्षायां बहुकालं न निद्रिता।।

तच्छ्रुत्वा सा पतिं ब्रूते प्रतीक्षाकरणे तव।
अहं हि पञ्चघण्टातः जागर्मि सततं गृहे।।

पत्न्यास्तद् वचनं श्रुत्वा विलम्बेन निरन्तरम्।
स्वगृहाऽऽगमनेऽभ्यस्तः पतिरेवम् उवाच यत्।।

प्रतीक्षे पञ्चघण्टातस्त्वहमप्यत्र भो! प्रिये!।
यदि त्वं शयने गच्छेः प्रविशेयं गृहे तदा।।

•

## निगृहीतः पतिस्तदा

एकदा चलभाषे तु पत्नी पप्रच्छ वै पतिम्।
प्रिये! त्वं वर्त्तसे कुत्र? साम्प्रतं किं करोषि च।।

पत्न्यास्तद् वचनं श्रुत्वा पतिस्ताम् प्रत्युवाच यत्।
अहं कार्यालये व्यस्तः स्वकीये साम्प्रतं प्रिये!।।

तदनन्तरमेवाऽथ पृष्टवान् सोऽपि तां तदा।
प्रिये! त्वमपि कुत्राऽसि? कुरुषे किं च साम्प्रतम्।।

पत्नी तस्य वचः श्रुत्वा चलभाषे तदा मुहुः।
मन्दं विहस्य यत् सत्यं तदेव निजगाद यत्।।

पश्य त्वत्पृष्ठतः स्थित्वा साम्प्रतं भोजनालये।
स्वसख्या सममेवाऽत्र कॉफी-पानं करोम्यहम्।।

•

## जब सो जाओ तब आऊँ

बहुत रात देरी से घर में पति जब धीरे से आया।
पत्नी ने टोका उसको क्यों यह विलम्ब मन को भाया।।

पत्नी के सवाल को सुनकर पति ने उससे कहा यही।
प्रिये! प्रतीक्षा में मेरी क्या देर रात जागती रही?।।

पत्नी बोली इन्तजार में सुन लो मैं तो रात यहाँ।
जाग रही पाँच घण्टे से लगातार अब नींद कहाँ।।

पत्नी की सुन बात रोज ही देर रात आने वाला।
पति बोला घबड़ाकर उससे अति संकोच पड़ा पाला।।

इन्तजार में मैं भी घण्टे पाँच बिताया था बाहर।
सोचा था जब सो जाओ तो घर में घुस जाऊँ अन्दर।।

•

## क्या करते हो सब जानूँ

एक बार मोबाइल पर पत्नी ने पति से पूछा यों।
प्रिय! बोलो इस समय कहाँ हो और अभी क्या करते हो?।।

पत्नी का सुनकर सवाल तब पति ने उत्तर दिया यही।
प्रिये! बैठकर ऑफिस में कुछ काम-काज में व्यस्त अभी।।

फिर पति ने भी पूछा उससे प्रिये! कहाँ इस पल तुम हो।
घर हो या बाहर हो बोलो और अभी क्या करती हो?।।

पति की बातें सुन पत्नी हँसकर उसको बतलाती है।
झूठे पति का धीरे से सच का सामना कराती है।।

कृपया अपने पीछे देखो मैं तो बैठी होटल में।
अपनी एक सहेली के संग कॉफी-पान कर रही मैं।।

•

## उलूकाः पतयो मताः

देवदत्तस्य भार्या वै साक्षात्कारार्थम् एकदा।
विशेषज्ञ-नराणां च पुरतः संस्थिता यदा।।

कश्चित् तत्र विशेषज्ञः साक्षात्कारे च पृष्टवान्।
भवतीनां विचारेषु पतयः कीदृशा मताः?।।

तेषां प्रश्नं समाकर्ण्य देवदत्ता ब्रवीति यत्।
पतयः सर्व एवाऽत्र उलूका एव मे मताः।।

तस्यास्तदुत्तरं श्रुत्वा विशेषज्ञा वदन्ति यत्।
भवती किमिदं वक्ति? स्पष्टं व्याख्यायताम् इदम्।।

तेषां तत्प्रश्नमाकर्ण्य देवदत्ताऽपि निर्भया।
पतीनाम् अथ सर्वेषां स्वभाव-विषयेऽब्रवीत्।।

सर्वासां पतयस्तावत् पत्नीनां सकलान् गुणान्।
रात्रावेवाऽन्धकारे च पश्यन्ति सर्वथा कथम्?।।

•

## श्याल्यः सख्यः सुखात्मिकाः

वार्त्तालाप-प्रसङ्गे च यज्ञदत्तस्त्वथैकदा।
निवेदयन् स्वजिज्ञासां देवदत्तम् उवाच यत्।।

शास्त्रेषु श्रूयते वाक्यं तदत्र चोद्धराम्यहम्।
दुःखं सनातनं मित्रं सुखम् आयाति याति च।।

एतद् वाक्यस्य व्याख्यायां किमप्येकं हि सुन्दरम्।
उदाहरणम् इच्छामि श्रोतुं तत् कृपया वदेः।।

निशम्य तस्य तत्प्रश्नम् उदाहरणमुत्तमम्।
प्रस्तुवन् देवदत्तोऽपि वाक्यम् एवमुवाच यत्।।

मम भार्या तु मत्पार्श्वे सदा गेहे विराजते।
तस्याः सख्यः स्वसारश्च परम् आयान्ति यान्ति च।।

•

## पति सब उल्लू होते हैं

देवदत्त की पत्नी पहुँची एक बार इण्टरव्यू में।
वहाँ विशेषज्ञ के सम्मुख बैठी जब उत्तर देने।।

किसी विशेषज्ञ ने पूछा इण्टरव्यू में प्रश्न यही।
कैसे आप सभी के मत में पति लगते हैं कहें सही।।

उसका सुनकर प्रश्न वहाँ तब देवदत्त-पत्नी कहती।
मेरे मत में उल्लू हैं जी सारे पति जन निश्चित ही।।

उसका उत्तर सुन वे सारे विशेषज्ञ थे चीख पड़े।
ऐसा तुम कैसे कह सकती? कृपया इसको स्पष्ट करें।।

उनका सुनकर प्रश्न तभी निर्भय होकर वह कहती है।
पतियों के स्वभाव के बारे में यूँ सबको समझाती है।।

ये पति लोग सदा पत्नी के सभी गुणों के बारे में।
उल्लू के समान देखें या परखें रात अन्धेरे में।।

●

## साली सहेलियाँ सुखरूपा?

बातचीत में यज्ञदत्त ने एक बार यूँ पूछ लिया।
मित्र देवदत्त से अपनी जिज्ञासा को व्यक्त किया।।

सुनो उद्धरण देता हूँ जो शास्त्र हमें बतलाता है।
दुःख सनातन सखा हमारा सुख तो आता जाता है।।

कृपया इसकी व्याख्या में अच्छा उदाहरण दो हमको।
जिससे हम सन्तुष्ट हो सकें समझा सकें तथा सबको।।

यज्ञदत्त का प्रश्न सुना तब देवदत्त भी मुसकाया।
उत्तम यूँ उदाहरण देकर एक वाक्य में समझाया।।

पत्नी मेरी घर में मेरे साथ सदा ही रहती है।
पर उसकी बहनें सहेलियाँ आती जाती रहती हैं।।

●

# कदाचित् सम्मतोऽप्यहम्

एकदा कलहे जाते गृहकार्ये भयङ्करे।
देवदत्तस्य पत्नी सा पतिमेवम् उवाच यत्।।

केनाऽपि मद्विचारेण त्वं तु न सम्मतः कथम्।
त्वं किं मां सर्वथा मूर्खां प्रमत्तां चाऽपि मन्यसे?।।

तस्या आक्रोशम् आकर्ण्य देवदत्तो विहस्य तु।
भार्यां विनम्र-भावेन तदैव निजगाद य यत्।।

न हि भो! पश्य नाऽस्त्येवम् भाषणेऽपि तवाऽधुना।
द्वितीयेनाऽस्ति वाक्येन सर्वथा सम्मतिर्मम।।

•

# विवाहाऽन्ते मति-भ्रमः

विवाहात् पूर्वम्

*प्रेमिका* : कियन्तो वद वर्त्तन्ते प्रिय! चन्द्रमसोऽधुना?।
तदहं ज्ञातुमिच्छामि विचार्य कृपया वदेः।।

*प्रेमी* : द्वौ चन्द्रौ चाऽत्र वर्त्तेते नभस्येकोऽपरो भुवि।
नभःस्थं जानते सर्वे भूतले तु तवाऽऽननम्।।

विवाहाऽनन्तरम्

*पत्नी* : कियन्तो वद वर्त्तन्ते प्रिय! चन्द्रमसोऽधुना।
तदहं ज्ञातुमिच्छामि कृपया ब्रूहि सत्वरम्।।

पतिः : किं नेत्राभ्यां विहीनाऽसि? नभस्यूर्ध्वं न पश्यसि?।
त्वद्-दृष्ट्याम् एकमात्रोऽयं नाऽऽगतः किं निशाकरः?।।

•

# मैं भी तो सहमत हूँ

एक बार यह देवदत्त की पत्नी घर के झगड़े में।
क्रोधित हो पति से बोली जोरों से वह गुस्से में।।

किसी बात पर तुम तो मेरे कभी नहीं सहमत होते।
मूर्ख और पागल हूँ मैं क्या बात यही मन में रखते।।

उसकी ऐसी बातें सुनकर देवदत्त उससे बोला।
हो विनम्र कुछ हँसकर उससे यूँ रहस्य तब था खोला।।

नहीं प्रिये! यह बात नहीं है सहमत भी तो होता हूँ।
अभी दूसरी बात कही जो उससे पूरा सहमत हूँ।।

•

# हो विवाह के बाद मति-भ्रम

विवाह से पहले

*प्रेमिका* : प्रिय बोलो चन्द्रमा यहाँ होते हैं जग में कितने?।
यही जानना चाहूँ मैं बतलाओ होते जितने।।

*प्रेमी* : दो दो हैं चन्द्रमा यहाँ आकाश बीच पहला है।
और दूसरा इस धरती पर तेरा ही मुखड़ा है।।

विवाह के बाद

*पत्नी* : प्रिय बोलो चन्द्रमा यहाँ जग में कितने होते हैं?।
यही जानना चाहूँ मैं बोलो जितने होते हैं।।

*पति* : फूट गई क्या आँखे? देखो आसमान के ऊपर।
एक चमकता दीख रहा जो सुन्दर शुभ्र निशाकर।।

•

## त्वं तु शान्ता भविष्यसि

वार्त्तालाप-प्रसङ्गे तु मन्दं मन्दं विहस्य च।
एकदा देवदत्तस्य पत्नी पतिम् उवाच यत्।।

कल्पना क्रियतां तावत् कथञ्चित् यद्यहं क्वचित्।
अतीवोष्णे तु पानीये पतेयं किं भवेत् तदा?।।

तस्यास्तद् वचनं श्रुत्वा देवदत्तोऽपि तत्क्षणम्।
धीरः सुस्मयमानस्तां वचनं त्वेवम् आह यत्।।

न तत्र भविता किञ्चित् जलं स्यात् उष्णमेव तत्।
परं त्वं सर्वकालेभ्यः शान्ता शीता भविष्यसि।।

•

## देहि मह्यं द्विचक्रिकाम्

एकदा देवदत्तस्तु यदा गेहे समागतः।
चुम्बनार्थं तदा पत्नीं सस्नेहं स न्यमन्त्रयत्।।

परन्तु तस्य पत्नी तत् प्रतिषिद्धवती यदा।
शाटिका दास्यते तुभ्यम् इत्युक्त्वा तेन लोभिता।।

तदाऽपि प्रतिषिद्धे स सुवर्णाऽऽभूषणं नवम्।
प्रदास्यते यदा प्रोक्तं नाऽपि तत् स्वीकृतं तया।।

तन्मध्य एव शयने पञ्चवर्षीय आत्मजः।
उपस्थितस्तदा ब्रूते देवदत्तम् इदं वचः।।

तात! त्वं कृपया शीघ्रं मदीयं चारु चुम्बनम्।
गृहाण च नवाम् एकां देहि मह्यं द्विचक्रिकाम्।।

•

## तुम ठंढी हो जाओगी

एक बार बातों बातों में हँसकर अपना मुँह खोली।
देवदत्त की पत्नी उससे प्रेम सहित कुछ यूँ बोली।।

प्यारे! करो कल्पना यदि मैं कहीं खौलते पानी में।
गिर जाऊँ यदि तो क्या होगा? यही जानना ठानी मैं।।

उट पटाँग बातें सुन उसकी मन में वहीं परखता है।
मन्द मन्द मुसकराकर उससे देवदत्त यूँ कहता है।।

होगा कुछ भी नहीं वहाँ वह पानी तो उष्णता लिये।
लेकिन तुम तो पूरी ठंढी हो जाओगी सदा प्रिये!।।

•

## मुझे साइकिल दे दो

देवदत्त घर में आकर के धीरे से कपाट खोला।
पत्नी से चुम्बन देने को प्रियता से सपाट बोला।।

मना कर दिया पत्नी ने जब चुम्बन देने को उससे।
साड़ी एक नई दूँगा यह बोल उठा तत्क्षण उससे।।

फिर भी उसने मना किया जब सोने का दूँगा गहना।
यह कह डाला फिर भी पत्नी ने चुम्बन को किया मना।।

इसी बीच वह पाँच बरस का उसका छोटा बेटा था।
देवदत्त से बोल उठा यह बिस्तर पर जो लेटा था।।

पापा! कृपया मेरा चुम्बन जितना भी चाहो ले लो।
लेकिन मेरे लिए साइकिल छोटी एक अभी दे दो।।

•

## व्यवहारोऽपि तादृशः

एकदा देवदत्तस्तु यात्रां कर्त्तुं समुत्सुकः।
वायुयाने यदाऽऽरूढस्तदैव परिचारिका।।

सुन्दरी तत्र सस्नेहम् औपचारिकतावशात्।
तस्याऽभिवादनं चक्रे स्मयमाना मुहुर्मुहुः।।

तदा प्रत्युत्तरे तत्र देवदत्तो ब्रवीति यत्।
मुखं तु भवदीयं भो! पत्न्यास्तुल्यं विभाति मे।।

तच्छ्रुत्वा रोषमापन्ना विमानपरिचारिका।
कपोले देवदत्तस्य ददौ त्वेकां चपेटिकाम्।।

तस्यास्तत्कृत्यमालक्ष्य विचित्रम् अनभीप्सितम्।
शनैः स्पृशन् कपोलं स्वं देवदत्तो ब्रवीति यत्।।

न केवलं मुखे चैव सादृश्यं वर्त्तते परम्।
स्वभावो व्यवहारश्च पत्न्याः सदृश एव ते।।

•

## पत्युः परिभाषा नवा

स्वीकृत्य यः स्वकीयं तु दोषं जगति सर्वदा।
याचते च क्षमां स वै 'सत्यनिष्ठः' समुच्यते।।

संशितो यस्तु दोषेषु नित्यं परम् उदारधीः।
क्षमां च याचते लोके 'बुद्धिमान्' स निगद्यते।।

दोषं विनाऽपि यस्तावद् गृहे शान्त्यर्थम् उत्सुकः।
याचते च क्षमां नित्यम् 'पतिः' सोऽयं निगद्यते।।

•

# वैसा ही व्यवहार तुम्हारा

एक बार जब देवदत्त यात्रा में तत्पर जाने को।
चढ़ने को विमान में जब था वह तैयार समाने को।।

दरवाजे पर ही विमान कें मुसकाती सी वह भोली।
अतिसुन्दर विमान-बाला यूँ सहज नमस्कार बोली।।

उत्तर में तब देवदत्त भी सहज भाव से है कहता।
अरे! आपका मुख तो मेरी पत्नी से बिलकुल मिलता।।

उसने ये बातें सुनते ही देवदत्त के गालों पर।
जोरों से जड़ दिया तमाचा एक वहीं पर गुस्साकर।।

इस अनपेक्षित हरकत पर तब देवदत्त भी घबराया।
धीरे से गालों को सहलाकर उससे यूँ फरमाया।।

केवल मुख ही नहीं तुम्हारा दीख रहा पत्नी जैसा।
है स्वभाव बर्त्ताव तुम्हारा भी पूरा ही उस जैसा।।

•

# वह तो 'पति' कहलाता

कर स्वीकार दोष को अपने क्षमा माँग लेता है जो।
है 'ईमानदार' कहलाता निश्चित ही जगती में वो।।

अपने दोषों पर संशय हो फिर भी जो उदार मन से।
क्षमा माँग लेता है जानो 'बुद्धिमान्' होता सबसे।।

लेकिन दोष नहीं होने पर भी जो नर गलती माने।
क्षमा माँग ले शान्ति हेतु घर में उसको 'पति' ही जानें।।

•

# पतिः विश्वस्त-सेवकः?

गीतां कार्यालयाध्यक्षः सरोषं निजगाद यत्।
कार्यालये विलम्बेन त्वम् अद्याऽपि समागता।।

एवं त्वं प्रायशश्चाऽत्र समायासि विलम्बितः।
न चैतद् उचितं मन्ये कारणं किं तदत्र भो!।।

तदेतत् प्रश्नमाकर्ण्य तस्याऽधिकारिणस्तथा।
दुःखं प्रकटयन्ती सा त्वधिकारिणम् आह यत्।।

न कश्चित् सेवकस्तावद् गृहे मे वर्त्तते प्रभो!।
गृहे सर्वाणि कार्याणि कर्त्तव्यानि मयैव च।।

तदेवं कार्यनिष्पादे विलम्बो जायते ध्रुवम्।
भृत्यः कश्चिन्न विश्वस्तः प्राप्यते करवाणि किम्?।।

समस्यां तदिमां श्रुत्वा सहानुभूतिपूर्वकम्।
तस्याः कार्यालयाऽध्यक्ष उपायम् एवमाह यत्।।

कथं न कुरुषे शीघ्रम् विवाहमेव साम्प्रतम्।
समस्याभिस्तथैताभिः शीघ्रं मुक्ता भविष्यसि।।

●

# पति ही अच्छा सेवक?

गीता के अधिकारी ने जब गुस्से से यह पूछा।
ऑफिस में आज भी लेट तुम आई हो क्या सूझा?।।

अक्सर रोज लेट आती हो यह तो ठीक नहीं है।
बतलाओ क्या कारण इसका हमको समझ नहीं है।।

अधिकारी का सुना प्रश्न तब अतिविनम्र वह भोली।
खेद प्रकट करके अपने अधिकारी से यूँ बोली।।

साहब! मेरे पास न कोई भी सर्वेण्ट मिला है।
घर में प्रातः काम मुझे ही सब करना पड़ता है।।

सभी काम निपटाने में निश्चित विलम्ब होता है।
नहीं भरोसे का नौकर भी आज यहाँ मिलता है।।

गीता की यह सुनी समस्या सौजन्यता दिखाई।
अधिकारी ने इस पर गीता को यह बात सुझाई।।

तुम जल्दी शादी कर लो फिर झञ्झट रहे न सारा।
सभी समस्याओं से निश्चित पाओगी छुटकारा।।

●

## न्यायालयादेशमहं प्रतीक्षे

रामेण सीता सह पुष्पकस्था,
सन्दिह्यमाना तु पुरीम् अयोध्याम्।
प्रणाम - कामा पति - जन्म - भूमिम्,
पप्रच्छ यत् क्वाऽस्ति तदत्र केन्द्रम्?।।

श्रीरामचन्द्रः समुवाच सीताम्,
कलौ युगेऽस्मिन् मम जन्म - भूमिः।
क्व विद्यते? तत्र विनिर्णयार्थम्,
न्यायालयादेशम् अहं प्रतीक्षे।।

•

## मैं निर्णय की करूँ प्रतीक्षा

एक बार पुष्पक विमान में सीता के संग कलियुग में,
बैठे थे श्रीराम जा रहे ऊपर कभी अयोध्या में।
सीता बोलीं उस धरती को मैं चाहूँ प्रणाम करना,
जन्म लिया आपने जहाँ उस जन्म-भूमि का केन्द्र कहाँ?।।

श्रीभगवान् रामजी बोले सीते! मेरी जन्म-धरा,
कैसे बतलाऊँ कलियुग में ठीक ठीक है अभी कहाँ?।
जिसका निर्णय न्यायालय ने अभी नहीं बतलाया है,
यही जानने हेतु प्रतीक्षा मुझको भी करवाया है।।

•

## चिन्तामुक्तो भवाम्यहम्

देवदत्तो यदाऽकस्मात् पुत्र्याः कक्षे प्रविष्टवान्।
विलोक्य स तदा स्तब्धस्तत्रैकां धमूवर्त्तिकाम्।।

तद् दृष्ट्वा स यदा पुत्रीं प्रष्टुमैच्छत् तदैव सः।
तत्र चैकं सुरापात्रं दृष्ट्वा व्याकुलतां गतः।।

पुत्री मे धूमपानं किं सुरापानं करोति च?।
इत्याशङ्कां हृदि ध्यात्वा पुनरन्वेषणे रतः।।

समुद्विग्नो यदा कक्षे द्रष्टुमैच्छत् इतस्ततः।
पर्यङ्कस्य तदाऽधस्तात् तत्र कक्षे स दृष्टवान्।।

युवकस्तत्र कश्चित् तु तिरोधानमपेक्षते।
तं दृष्ट्वा स तु निश्चिन्तो दीर्घं निःश्वस्य चाऽब्रवीत्।।

प्रभो! एतानि वस्तूनि युवकस्यैव सन्त्यतः।
धन्यवादमहं कुर्वन् चिन्तामुक्तो भवामि च।।

•

## मातरं न वदिष्यामि

विद्यालयात् समायातं सदा क्रीडासु तत्परम्।
विद्यालयीय-कार्येषु चोपेक्षा-भावमाश्रितम्।।

देवदत्तः स्वकीयं वै पुत्रम् आह शनैर्यदा।
तवाऽध्यापिक्रया चैकं प्रेषितं पत्रमस्ति मे।।

पितुस्तद् वचनं श्रुत्वा मध्य एव सुतस्तदा।
मन्दं मन्दं विहस्यैवं जनकं प्राह सत्वरम्।।

तात! चिन्ता न कर्त्तव्या न चैतद्विषये त्वहम्।
कदाचित् कथयिष्यामि न किञ्चिदपि मातरम्।।

•

## पुत्री सदा सही है?

एकाएक जब देवदत्त पुत्री के कमरे में आया।
देख एक सिगरेट वहाँ पर ठिठका चिन्ता की छाया।।

पुत्री से इस बारे में जब हुई पूछने की इच्छा।
देख सुरा की बोतल भी पाया व्याकुलता की शिक्षा।।

धूम्रपान और सुरापान क्या मेरी पुत्री है करती?।
आशंका ले मन में खोजा कमरे की सारी धरती।।

व्याकुल मन से कमरे में सब ओर ही देख रहा था।
वह पलंग के नीचे अपनी दृष्टि फेंक रहा था।।

देखा उसने उसे देखकर एक युवक घबराता।
छिपना चाह रहा था लेकिन वह था छिप न पाता।।

उसे देख ठंढी सांसे ले देवदत्त कहता है।
यह सामान उसी का है मेरी तो सही सुता है।।

•

## (प्रेम) पत्र मिला मैडम का?

विद्यालय का काम छोड़कर सदा खेलने में तत्पर।
देख पुत्र को देवदत्त ने जब समझाया यूँ कहकर।।

विद्यालय में क्लास पढ़ातीं जो तुमको मैडम जी।
चिट्ठी उनकी मिली मुझे है तुमसे कुछ कहना जी।।

सुनकर ऐसी बात बीच में ही बेटा कहता है।
मन्द मन्द मुसकाकर बापू से रहस्य करता है।।

अरे पिता जी! आप न बिलकुल चिन्ता करें यहाँ पर।
इस बारे में मम्मी को मैं कुछ न कहूँगा जाकर।।

•

## भवान् एव निलीनः स्यात्

विद्यालयं परित्यज्य पलाय्य गृहमागतम्।
पौत्रं वीक्ष्य यदा प्राह वाक्यमेतत् पितामहः।।

अरे! विद्यालयस्यैव गुरवो बहवोऽधुना।
इहैव भो! समायान्ति गृहे साम्प्रतमेव ते।।

अतो भूत्वा निलीनस्त्वं तेषु प्राप्तेषु चेह भो!।
समक्षं नैव चाऽऽयाहि भद्रमिच्छसि चेत् तदा।।

पितामहस्य तद्वाचं श्रुत्वा पौत्रो ब्रवीति यत्।
निलीनो न भविष्यामि सत्यं च कथयाम्यहम्।।

कृपयाऽत्र भवानेव निलीनो वर्त्ततां यतः।
भवतां मृत्युमाकर्ण्य ते समायान्ति साम्प्रतम्।।

•

## न तातो बुद्धिमत्तरः?

कश्चित् पुत्रस्तु तातं स्वं प्रश्नमेवम् उवाच यत्।
जनकात्मजयोर्मध्ये कतरो बुद्धिमत्तरः?।।

तस्य प्रश्नं समाकर्ण्य जनकस्तनयमाह यत्।
तात एव सदैव स्याद् बुद्धिमान् इति मे मतिः।।

तदुत्तरं समाकर्ण्य पुत्रस्तं पृष्टवान् पुनः।
दूरभाषणयन्त्रस्य केनाऽऽविष्करणं कृतम्।।

पुत्रस्य प्रश्नमाकर्ण्य तातः पुत्रमुवाच यत्।
'ग्राहम् बेल' इति ख्यातस्तस्याऽऽ विष्कारकोऽभवत्।।

तदुत्तरं समाकर्ण्य पुत्रस्तम्पुनराह यत्।
ग्राहमस्य पिता नाऽभूत् तस्याऽऽविष्कारकः कथम्?।।

•

## आप स्वयं छिप जाएँ

विद्यालय को छोड़ बीच में पोता जब घर आया।
दादा बोले पोते से तब देख पौत्र की माया।।

अरे! तुम्हारे सब मास्टर जी लोग हमारे घर में।
अभी सूचना मिली न जाने क्यों आते अन्दर में।।

यदि कल्याण चाहते हो तो जब हो उनका आना।
बाहर नहीं निकलना घर से तुम घर में छिप जाना।।

दादा जी की बातें सुन वह सात बरस का पोता।
बोला दादा जी! मैं तो अपने को नहीं छिपाता।।

आप स्वयं छिप जाएँ तो कल्याण हम सभी पाते।
समाचार आपकी मृत्यु का सुनकर वे सब आते।।

•

## बुद्धिमान् बेटा है

पुत्र एक दिन प्रश्न एक पापा से यूँ करता है।
पिता पुत्र में कौन अत्यधिक बुद्धिमान् होता है।।

सुनकर प्रश्न कहा पापा ने यह सवाल क्यों करते।
पिता-पुत्र में सदा पिता ही बुद्धिमान् हैं रहते।।

बातें सुनकर तभी पिता की एक प्रश्न वह बच्चा।
किसने टेलीफोन बनाया? यह धीरे से पूछा।।

बेटे के सवाल को सुन पापा ने यही बताया।
'ग्राहम-बेल' व्यक्ति था जिसने टेलीफोन बनाया।।

उत्तर सुनकर पापा का तब पुत्र प्रश्न करता यह।
'ग्राहम्' के बाबू ने क्यों ना आविष्कार किया वह?।।

•

## कन्यामित्राणि लप्स्यसे

एकदा देवदत्तस्तु पञ्चवर्षीयम् आत्मजम्।
सत्कार्य-प्रेरणार्थं स एवं वचनमब्रवीत्।।

अरे पुत्र! यदा भद्रम् आचरणं भवेत् तदा।
ज्येष्ठीभूय तदा कन्यामित्रं (गर्लफ्रेण्ड) त्वं समवाप्स्यसि।।

तस्य तद् वचनं श्रुत्वा पुत्रस्तं प्रश्नमाह यत्।
यदि भद्रो भवेयं न तदा किं प्राप्स्यते मया?।।

देवदत्तस्तदा ब्रूते यद्येवं स्यात् तदा त्वया।
कन्यामित्राणि लप्स्यन्ते बहूनि निश्चितं मतम्।।

•

## द्वितीयया कृतं कार्यम्

एकदा देवदत्तस्तु स्वपुत्रेण समं यदा।
चिकित्सक-गृहे गत्वा वाक्यमेवम् उवाच यत्।।

एष मे पुत्रकस्तावत् कुञ्जिकां भुक्तवान् ततः।
तस्याः निःसारणार्थं वै भवत्पार्श्वे समागतः।।

देवदत्त-वचः श्रुत्वा चिकित्सक उवाच यत्।
अहो! कदा बालकोऽयं कुञ्जिकां तां निगीर्णवान्?।।

चिकित्सकस्य प्रश्ने तु देवदत्तो ब्रवीति यत्।
त्रिमासपूर्वम् एतेन निगीर्णा कुञ्जिका प्रभो!।।

ततश्चिकित्सकः क्षुब्धः सोपालम्भम् उवाच यत्।
अरे! त्रिमास-पर्यन्तं किं कृतं केन वा कृतम्।।

चिकित्सक-वचः श्रुत्वा देवदत्तो ब्रवीति यत्।
द्वितीया कुञ्जिका याऽभूत् तया कार्यं कृतं मया।।

•

## गर्लफ्रेण्ड्स पाओगे

पाँच वर्ष के बेटे को था देवदत्त समझाता।
अच्छा काम सदा करने को प्रेरणार्थ यह कहता।।

बेटा अगर सदा जीवन में अच्छा काम करोगे।
होकर बड़ा एक अच्छी सी गर्लफ्रेण्ड पाओगे।।

सुनकर ऐसी बात तभी बच्चे ने कहा बतावें।
यदि अच्छा मैं नहीं बनूँ तो क्या पाऊँ? समझावें।।

बेटे का सुन प्रश्न कहा फिर देवदत्त ने निश्चित।
गर्लफ्रेण्ड्स मिल जाएँ ढेरों तब तुमको मन-वाञ्छित।।

•

## करता रहा काम अपना

देवदत्त अपने बेटे को साथ लिए घबराया सा।
डॉक्टर के घर पहुँचा बोला वाक्य यही उलझाया सा।।

चाभी एक निगल डाली है लड़का मेरा डॉक्टर जी।
आया पास आपके उसे निकलवाने मैं भागा भागा जी।।

सुनकर देवदत्त की बातें उससे डॉक्टर यूँ बोला।
अरे! तुम्हारे लड़के ने था बोलो चाबी कब निगला?।।

यह सवाल सुन देवदत्त ने उसको यह बतलाया तब।
तीन महीने बीते हैं जब चाभी निगली है साहब!।।

क्षुब्ध भाव तब गुस्से में डॉक्टर ने उससे प्रश्न किया।
तीन महीने थे क्या करते? कैसे क्या तब काम किया।।

डॉक्टर की बातें सुनकर तब देवदत्त का था कहना।
अजी! दूसरी चाभी से मैं करता रहा काम अपना।।

•

## भवती मे पितामही

पञ्चवर्षीय-पुत्रेण सममेव यदैकदा।
देवदत्तस्य पत्नी तु सौन्दर्यभवने (ब्यूटीपार्लें) गता।।

यदा च तत्र सा केशान् कृष्णवर्णेन रञ्जितान्।
कारयन्ती स्थिता तत्र पुत्रः स पृष्टवान् तदा।।

मातः! एवं कथं केशान् एतान् कृष्णान् करोषि भो!।
इत्यहं ज्ञातुमिच्छामि कृपया कारणं वदेः।।

तस्य प्रश्नं समाकर्ण्य माता तस्य ब्रवीति यत्।
श्वस्तने दिवसे विद्यालयस्य तव चोत्सवः।।

तत्र दृष्ट्वा जनाः सर्वे मम शुक्लान् शिरोरुहान्।
कथयिष्यन्ति यद् वृद्धा जननी तव वर्त्तते।।

तच्छ्रुत्वा तनयो ब्रूते न केशान् अम्ब! रञ्जयेः।
कथयिष्याम्यहं सर्वान् यदियं मे पितामही।।

•

## तस्याः सर्वोच्चता गृहे

मातृद्वारा प्रदत्तां तु समालभ्य चपेटिकाम्।
वाक्कीलस्य सुतः क्षुब्धः पितरं वाक्यमाह यत्।।

चपेटिका-प्रहारं मे जननी साम्प्रतं कथम्।
प्राकरोत् नितरां तात! विशिष्टं कारणं विना।।

तदुपालम्भमाध्याय बालकस्य मुखे तदा।
चपेटिकां प्रयच्छन् स तातोऽपि सुतमब्रवीत्।।

मत्पार्श्वे कथमायातः मूर्ख! किं नैव वेत्सि यत्।
यस्तु न्यायालयो देशे सर्वोच्चः सम्प्रकीर्त्तितः।।

निर्णयं तस्य श्रुत्वाऽपि को मूर्खः साम्प्रतं पुनः।
उच्च-न्यायालये तत्र विचारार्थं प्रयाति भो!।।

•

## तुम मेरी दादी हो

एक दिवस जब देवदत्त की पत्नी घर बाहर निकली।
पाँच वर्ष के बेटे के संग ब्यूटीपार्ले जा पहुँची।।

अपने बालों में वह काला रंग वहाँ करवाती थी।
तभी पुत्र ने पूछ लिया जो उसको समझ न आती थी।।

मम्मी! अपने बाल यहाँ तुम काले क्यों करवाती हो।
मुझके समझ नहीं आता है क्यों इनको रंगवाती हो?।।

बेटे के सवाल को सुनकर माँ उसको बतलाती है।
तेरे विद्यालय में उत्सव कल होगा समझाती है।।

बेटा! बालों को सफेद जब लोग वहाँ पर देखेंगे।
तेरी मम्मी बूढ़ी है यह बात वहाँ पर कह देंगे।।

सुन बातें तब बेटा बोला नहीं रंगाओ बाल यहाँ।
'तुम मेरी दादी हो' सबको कह दूँगा मैं बात वहाँ।।

•

## वह घर में सुप्रीम-कोर्ट है

माता से पा एक तमाचा पुत्र बहुत चकराया जब।
भरे क्षोभ में वह वकील पापा से किया शिकायत तब।।

पापा जी! देखो मम्मी ने बिना बात के मारा है।
अभी अभी जड़ दिया तमाचा क्या गुस्से का पारा है।।

सुनी शिकायत बेटे की पापा ने भी जड़ दिया उसे।
एक तमाचा तभी और यूँ बोला बात कहा कैसे?।।

बिलकुल बेवकूफ तुम हो क्या कुछ भी तो जानते नहीं।
मेरे पास यहाँ क्यों आए? क्या इतना भी पता नहीं?।।

निर्णय जो सुप्रीम-कोर्ट दे फिर कानून यही कहता!
हाई-कोर्ट कहीं का उस पर कभी विचार नहीं करता।।

•

## भवद्विषयिकी वार्त्ता

युवकस्तनयः कश्चित् विनम्रो विनयाऽन्वितः।
सादरं पृष्टवान् एवं मातरं प्रश्नम् एकदा।।

मातः! कश्चिन्नरो ब्रूहि विवाहं स्वेच्छया यदि।
मनोनुकूलया कुर्यात् कन्यया सत्यनिष्ठया।।

तदा किं पितरौ तस्य सदस्याश्च गृहस्य वा।
अप्रसन्ना भविष्यन्ति न च स्तोष्यन्ति तं नरम्?।।

पुत्रस्य तद्वचः श्रुत्वा सावधाना सशंकिता।
जननी तनयं तत्र वचनम् अब्रवीत् तदा।।

मन्येऽहम् इह कन्यायाः कस्याश्चित् जीवनेऽधुना।
सान्निध्ये त्वं प्रवृत्तोऽसि शृणु मद्वचनं ततः।।

साम्प्रतिका युवत्यस्तु चतुराः स्वार्थचोदिताः।
यदा कमपि पश्यन्ति सुन्दरं युवकं तदा।।

संसारे तं वशीकर्त्तुं यतन्ते ताः पुनः पुनः।
सावधानतया भाव्यं पुत्र! मे सर्वदा त्वया।।

मातुस्तद् वचनं श्रुत्वा युवा स विनयाऽन्वितः।
मातरम् अब्रवीत् तत्र सहसा तदिदं वचः।।

न हि मातः! तथा किञ्चित् नास्ति यत्त्वं हि शोचसि।
यदत्र परमं सत्यं वर्त्तते तद् ब्रवीमि यत्।।

अहं हि दूरभाषेऽद्य क्वचित् पितृमुखाद् यदा।
केनाऽपि सह वार्त्तायां यच्छ्रुतं ज्ञातवान् तदा।।

भवन्तौ स्वेच्छया तावत् मनोनुकूलमेव च।
परस्परं विवाहं स्वं कृतवन्तौ इति स्थितिः।।

●

# बात आप लोगों की है

नौजवान बेटे ने होकर अति विनम्र जननी से।
पूछ लिया यह प्रश्न एक दिन सकुचाता अपनी से।।

मम्मी! बोलो यदि कोई व्यक्ति विवाह करता है।
अपनी मनमरजी से सच्ची लड़की को चुनता है।।

फिर उसके मम्मी पापा एवं घर के सब सज्जन।
अप्रसन्न हो कैसे उसका करें नहीं अभिनन्दन?।।

बेटे की सुन बात सशंकित सावधान वह माता।
नौजवान बेटे से बोली देकर अपना नाता।।

ऐसा लगता है मुझको कोई लड़की का चक्कर।
निश्चित ही तुम पाल रहे हो अपने मन के अन्दर।।

सुनो ध्यान से आज युवतियाँ सब स्वार्थी होती हैं।
कहीं किसी सुन्दर लड़के को देख वहीं फँसती हैं।।

फिर उसको वश में करने का वे प्रयास करती हैं।
सावधान तुम उनसे रहना मेरी मति कहती है।।

माता की बातों को सुनकर नौजवान वह बेटा।
बोला विनम्रता से धीरे किया न लाग-लपेटा।।

मम्मी! ऐसी बात नहीं तुम सोचो ऐसा कुछ ना।
बात यहाँ पर जो सच्ची है कहता उसको सुनना।।

मोबाइल पर आज पिता जी के मुख जो सुन पाया।
बात किसी से जो कहते उससे अनुमान लगाया।।

मन मरजी से किया परस्पर ब्याह आप दोनों ने।
इस रहस्य को जीवन में फिंर अब ही जाना मैंने।।

•

# कारयानं प्रदत्तवान्

जामातृणां त्रयाणां या श्वश्रूः काचिदथैकदा।
तेषां स्नेह-परीक्षार्थं चिन्तनं कृतवत्यहो!।।

ततः सा ज्येष्ठ-जामात्रा सार्धं नद्यास्तटे गता।
निपत्य सहसा नद्यां साहाय्यं याचते स्म सा।।

शीघ्रमेव च जामाता ज्येष्ठो नद्यां स तत्क्षणम्।
कूर्दित्वा तत्र साहाय्यं कृत्वा प्राणान् ररक्ष सः।।

अन्येद्युः सा तु जामातुर्गृहे गत्वा तदा नवम्।
स्कूटरं प्रददौ तस्मै स्नेह-सम्बन्ध-संयुता।।

एवमेव द्वितीयेन जामात्रा सममेव च।
तथैव घटितं तत्र ददौ तस्मै द्विचक्रिकाम्।।

परं तृतीयजामात्रा समं नद्यां यदा गता।
तथैव च परीक्षार्थं प्रविष्टा सा नदी-जले।।

परन्तु तेन साहाय्यं तत्सुरक्षार्थं न वै कृतम्।
अतो निमज्ज्य नद्यां सा दुःखं मृतवती यदा।।

अन्येद्युः श्वशुरस्तस्य किन्तु तद्गृहमागतः।
कारयानं नवीनं च हृष्टस्तस्मै प्रदत्तवान्।।

●

# नई कार भिजवाया

तीन तीन दामादों की जो सास बनी थी प्यारी।
एक दिवस करने को ठानी स्नेह-परीक्षा भारी।।

फलतः एक नदी के तट पर ज्येष्ठ दमाद सहित वो।
जाकर गिरी नदी में माँगी थी सहायता फिर वो।।

बड़ा दमाद तुरन्त नदी में कूदा और चिल्लाया।
कर सहायता उसकी तत्क्षण जीवन तुरत बचाया।।

अगले दिन उसके घर जाकर वहाँ सास ने उसको।
नया एक स्कूटर सौंपा किया प्रशंसित उसको।।

इसी प्रकार पुनः उसने मझले दामाद को नापा।
वह भी पास हुआ प्रियता में हीरोहाण्डा सौंपा।।

लेकिन जब छोटे दमाद के संग में गई नहाने।
इम्तहान लेने को उसका पहुँची नदी मुहाने।।

लगी डूबने तब दमाद को कहने लगी बचाने।
आया नहीं बचाने जब वो डूबी नदी मुहाने।।

पर अगले दिन उस दामाद के पास ससुर था आया।
हो प्रसन्न उसकी करनी पर नई कार भिजवाया।।

●

## कुत्र मे पौरुषं तदा?

सदैव धूम्रपानार्थम् उद्यतं युवकं सुतम्।
एकदा देवदत्तस्तु गभीरेणोक्तवान् इदम्।।

सुरा-सिग्रेट-कन्याभ्यः सर्वदा जीवने त्वया।
दृष्ट्वैव दूरतो भाव्यम् इमे ते शत्रवो मताः।।

तातोपदेशम् आकर्ण्य तस्य पुत्रः समुद्धतः।
विनयाऽवनतो भूत्वा प्रश्नमेवम् उवाच यत्।।

परन्तु बहुधा प्रोक्तः शिक्षितश्च पुराऽप्यहम्।
शत्रुभिर्नैव भेत्तव्यं स्थातव्यं तत्समक्षतः।।

यद्यहं भीरुताग्रस्तः शत्रुभिर्भीतितां गतः।
शान्तो दूरो भविष्यामि कुत्र मे पौरुषं तदा?।।

•

## कहाँ गया है पौरुष?

एक दिवस जब युवा पुत्र को बीड़ी पीते देखा।
मस्तक पर तब देवदत्त के उभरी चिन्ता-रेखा।।

बोला वह बीड़ी शराब लड़की से दूर रहा कर।
जीवन में यदि बढ़ना हो दुश्मन इनको माना कर।।

सुनकर बात पिता की यूँ वह ढीठ पुत्र कहता है।
कुछ विनम्र बनकर सवाल फिर बापू से करता है।।

लेकिन पहले कभी आपने कहा और सिखलाया।
नहीं शत्रु से डरना है डट जाना यह बतलाया।।

यदि मैं डरकर इन्हीं दुश्मनों से पीछे भागूँगा।
दुर्बल और भगोड़ा बनकर कायर कहलाऊँगा।।

•

## इन्दीवरत्वम् उपयाति

सामान्य - मानव - मनांस्यतिमोदयन्ती,
सम्पर्क - सूत्रमभितो बहु साधयन्ती।
सद्भावना - भरित - राष्ट्र - सरोवरेऽस्मिन्,
इन्दीवरत्वम् उपयाति सदैव 'हिन्दी'।।

●

## 'हिन्दी' नील कमल है

सभी मनुष्यों के मानस को अति प्रसन्न करती है,
जन जन में जो सम्पर्कों का सेतु सदा रचती है।
सद्भावों के राष्ट्र-सरोवर में जो निर्मल जल है,
मेरी प्यारी भाषा 'हिन्दी' उसमें नील कमल है।।

●

## कं याचे ननु तद् धनम्?

देवदत्तं तु दुःखेन महता पीडितं भृशम्।
विलोक्य यज्ञदत्तस्तं पृष्टवान् तस्य कारणम्।।

यज्ञदत्तेन पृष्टे तु कारणे तत्र चिन्तितः।
देवदत्तः स्वदुःखस्य कारणं निजगाद यत्।।

पञ्च लक्षाणि रूप्याणि कस्मैचित् सुहृदे स्वयम्।
प्लास्टिक-शल्य-कार्यार्थं दत्तवान् एकदा हि सः।।

तस्य तद्वचनं श्रुत्वा यज्ञदत्तो ब्रवीति यत्।
कथं न याचसे स्वीयं धनं तु सुहृदं परम्?।।

यज्ञदत्त-वचः श्रुत्वा देवदत्तस्तु दुःखितः।
दुःखस्य कारणं तत्र वर्णयन् एवमाह यत्।।

प्लास्टिक-शल्य-कृत्ये तु संजाते सुहृदं च तम्।
परिचेतुं न शक्नोमि कथं याचे तदा धनम्?।।

•

## शोधः किं वर्त्तते सखे!

यदि कस्यचिदेकस्य लेखकस्य यदा सखे!।
लेखं वा पुस्तकांशं वा गृह्णन्ति ननु लेखकाः।।

ज्ञानचौर्यमिदं मत्वा लेखकं तं बुधास्तदा।
निन्दन्ति चाऽऽथ गर्हन्ति सत्यमेतद् वदाम्यहम्।।

बहूनां लेखकानां च पुस्तकांशं परन्तु ये।
लेखं वा लेखनांशं वा विचारान् अथवा यदा।।

स्वकीये पुस्तके तावत् संगृह्णन्ति लिखन्ति च।
तदेतत् सकलं कार्यं 'शोध' इत्यभिधीयते।।

•

## किससे पैसा माँगू?

देवदत्त को दुःखी देखकर यज्ञदत्त ने पूछा।
कारण क्या तुम दुःखी बहुत हो मुझे नहीं कुछ सूझा।।

बातें सुनकर यज्ञदत्त की देवदत्त यह बोला।
अपने दुःख के कारण का वह यूँ रहस्य तब खोला।।

किसी मित्र को पाँच लाख की दिया उधारी उसने।
चेहरे की प्लास्टिक-सर्जरी करवानी थी जिसने।।

यज्ञदत्त तब बोला सुनकर देवदत्त की बातें।
हुई सर्जरी पूर्ण पुनः तब रुपये क्यों ना माँगे?।।

यज्ञदत्त का यह सवाल सुन देवदत्त कहता है।
दुःख का कारण छिपा हुआ जो वह प्रकटित करता है।।

हुई सर्जरी उसकी जब से क्या तुमको समझाऊँ।
तब से मैं पहचान न उसको पाता क्या बतलाऊँ?।।

●

## शोध किसे कहते हैं?

यदि कोई अपनी पुस्तक में कहीं किसी लेखक का।
लेख अंश अथवा पुस्तक का कुछ भी अंश है लेता।।

ऐसे लेखक की सब निन्दा करते तथा बुराई।
लेखन के इस चोरी में है बिलकुल नहीं बड़ाई।।

लेकिन यदि अनेक लेखकों के पुस्तक अंशों को।
उनके लेखों को अथवा उनके विचार-मूलों को।।

कोई अपनी पुस्तक में लेता है या लिखता है।
उसको 'शोध' कहा जाता है डिग्री भी पाता है।।

●

## किमेतदपि वेत्सि न?

विक्षिप्तानां मनोरोग-ग्रस्तानाम् आतुरालये।
नृत्ये मग्नान् जनान् वीक्ष्य चिकित्सक उवाच यत्।।

कथं नृत्यथ यूयं भो! किमत्र हर्षदं तथा?।
तस्य तद्वचनं श्रुत्वा विक्षिप्तास्ते तदाऽब्रुवन्।।

नेह स्यात् किंचिदाश्चर्यं वयं स्मो वरयात्रिणः।
गच्छामो वरयात्रायां नृत्य-गान-रता वयम्।।

परमेकं नरं तत्र शान्तभावेन संस्थितम्।
दृष्ट्वा चिकित्सकोऽपृच्छत् त्वं कथं नैव नृत्यसि?।।

चिकित्सकवचः श्रुत्वा विक्षिप्तः स ब्रवीति यत्।
अहमेव वरश्चाऽस्मि किमेतदपि वेत्सि न?।।

•

## सुतो मे तव जामाता?

कश्चिद् विकत्थमानस्तु देवदत्तमथैकदा।
तस्योपहासं कुर्वाणो वचनं त्वेवमब्रवीत्।।

मम पार्श्वे तु बैंकेषु पर्याप्तं धनमस्ति भो!।
नवानि कारयानानि नवीनं भवनं तथा।।

महार्घाणि च पात्राणि नाना-भोज्यानि तत्र च।
बहुमूल्यानि वस्तूनि वस्त्राणि विविधानि च।।

तव पार्श्वे परं मित्र! वर्त्तते किं तथाविधम्।
इत्यहं ज्ञातुमिच्छामि कृपया ब्रूहि सत्वरम्?।।

मित्रस्य वचनं श्रुत्वा देवदत्तोऽपि तत्क्षणम्।
मन्दं मन्दं विहस्यैवं सखायं प्रत्युवाच यत्।।

एक एव सुपुत्रो मे वर्त्तते सुन्दराननः।
तस्यैकं कन्यकामित्रं विद्यते त्वत्सुता च सा।।

•

## इतना भी क्या नहीं जानते?

कभी किसी पागलखाने में नाच गान करने में।
मस्त पागलों के समूह से पूछ लिया डॉक्टर ने।।

कहो खुशी का कारण क्या जो नाच गान करते हैं?।
डॉक्टर की बातों को सुन वे पागल कह उठते हैं।।

हम सब आज बराती बनकर नाच गान करते हैं।
होकर हर्ष विभोर सभी अब तो बरात चलते हैं।।

किन्तु एक पागल को देखा बैठा शान्त अकेले।
पूछा डॉक्टर ने तुम क्यों ना नाच रहे अलबेले?।।

बातें सुन डॉक्टर की वह पागल बोला मुसकाकर।
इतना भी क्या नहीं जानते मैं दूल्हा ए! डॉक्टर।।

•

## वह दामाद तुम्हारा?

डींग मारता जब कोई श्री देवदत्त से बोला।
उसका कुछ उपहास उड़ाता यूँ अपना मुँह खोला।।

बैंकों के खाते में मेरे पास बहुत पैसा है।
नया काफिला कारों का है नया मकान सजा है।।

मँहगे बर्तन हैं उनमें सब भोज्य पदार्थ भरे हैं।
मँहगी हैं वस्तुएँ सभी और कपड़े नए नए हैं।।

पर हे मित्र! बताओ मुझको पास तुम्हारे क्या है?।
यही जानना चाहूँ मैं भी क्या इसका उत्तर है?।।

बातें सुन यह देवदत्त भी तुरत मित्र से बोला।
मन्द मन्द मुसकाता जाता फिर रहस्य यूँ खोला।।

मेरे पास पुत्र है मेरा जो सुशील सच्चा सुन्दर।
उसकी गर्लफ्रेण्ड है तेरी पुत्री जो मरती उस पर।।

•

## विक्रेता तत्र वक्तव्यः

विकत्थमानो वार्त्तायाम् आत्म-श्लाघा-समुत्सुकः।
एकदा यज्ञदत्तस्तु देवदत्तम् उवाच यत्।।

शृणुष्व नाऽत्र सन्देहः सत्यमेव ब्रवीमि च।
'असम्भव'-पदं नैव शब्दकोषे ममाऽस्ति भो!।।

तस्य तद् वचनं श्रुत्वा देवदत्तो मुहुर्मुहुः।
स्मयमानस्तदा तत्र यज्ञदत्तं ब्रवीति यत्।।

क्रयणात् शब्दकोषस्य दृष्टं किं न त्वया पुरा।
कथं मुद्रणदोषोऽयं पुस्तके ते समागतः?।।

अधुना कथनेनाऽत्र को लाभो वर्त्तते सखे!।
विक्रेता शब्दकोषस्य वक्तव्यस्तत्कृते त्वया।।

•

## अजाया एव अण्डानि

वार्त्तालाप-प्रसङ्गेऽथ यज्ञदत्तम् अथैकदा।
विहसन् देवदत्तस्तु वाक्यमेवम् उवाच यत्।।

अजा मम निशायां तु चतुरण्डानि साम्प्रतम्।
प्रदत्ते प्रत्यहं तस्मात् सुसन्तुष्टोऽस्मि सर्वथा।।

तच्छ्रुत्वा यज्ञदत्तस्तु क्षुब्धः किञ्चिद् उवाच यत्।
कथं भो! भाषसे मिथ्या क्वचिदण्डं ददात्यजा?।।

यज्ञदत्तस्य शंकायां देवदत्तोऽपि तत्क्षणम्।
मन्दं मन्दं विहस्यैवं यज्ञदत्तम् उवाच यत्।।

अरे मूर्ख! न जानासि? नैव मिथ्या वदाम्यहम्।
कुक्कुट्या नामधेयं मे "अजा" इत्येव वर्तते।।

•

## विक्रेता को कहना

यज्ञदत्त जो डींग मारता करता स्वयं बड़ाई।
देवदत्त से हाँक रहा यूँ बोला मेरे भाई!।।

सच कहता हूँ सुन लो मेरी बात न कुछ संशय है।
नहीं 'असंभव' शब्द हमारे शब्दकोष में अब है।।

सुनकर उसकी डींग वहाँ तब देवदत्त मुसकाया।
यज्ञदत्त से हँस धीमे फिर बात यही बतलाया।।

अरे! खरीदा था दुकान पर शब्दकोष जब तुमने।
नहीं ठीक से क्यों देखा तब छपा नहीं जो उसमें?।।

लाभ नहीं अब कुछ भी कहने से ऐसा ही मानो।
शब्दकोष का विक्रेता वह क्या कहता है जानो?।।

●

## नाम उसी का है बकरी

बातचीत में यज्ञदत्त से एक बार हँस करके।
देवदत्त ने घटना एक सुनाई कुछ रुक करके।।

रोज रात मेरी बकरी तो अण्डे चार है देती।
जिसे देखकर सन्तुष्टि अति सदा मुझे है होती।।

देवदत्त की बातें सुनकर यज्ञदत्त झुंझलाया।
बोला क्या बकरी भी अण्डे देती? झूठ बताया।।

यज्ञदत्त की शंका सुनकर देवदत्त मुसकाता।
उसी समय मित्र को अपने कहता यूँ समझाता।।

अरे मूढ़! तुम नहीं समझते कभी झूठ बोलता नहीं।
उस मुर्गी का नाम है 'बकरी' तुम शायद जानते नहीं।।

●

## अद्यैवाऽस्त्यन्तिमा स्पर्धा

एकदा देवदत्तस्तु चिकित्सकमुवाच यत्।
न रात्रौ गहना निद्रा कदाचिन्मे प्रवर्त्तते।।

निशायां वानराः स्वप्ने पाद-कन्दुक-खेलने।
तत्परा बहवस्तावत् दृश्यन्ते मे निरन्तरम्।।

देवदत्तवचः श्रुत्वा तदा तस्मै चिकित्सकः।
काश्चित् तु गोलिकाः दत्त्वा शयनात् पूर्वमेव ताः।।

भोक्तव्या इति निर्दिश्य यदा गन्तुं समुद्यतः।
तदैव देवदत्तः स चिकित्सकम् उवाच यत्।।

अद्य रात्रौ न भोक्ष्यामि गोलिकां तां महोदय!।
श्वस्तनाद् दिवसात् नित्यं ग्रहीष्यामि निरन्तरम्।।

तस्य तद्वचनं श्रुत्वा पृष्टवान् तं चिकित्सकः।
कथं तां गोलिकाम् अद्य भोक्ष्यसे न हि मां वद?।।

चिकित्सक-वचः श्रुत्वा देवदत्तो ब्रवीति यत्।
अद्य सर्वाऽन्तिमा स्पर्धा (फाइनल) वानराणां प्रवर्त्स्यते।।

•

## पुराऽपि कामनैव मे

वार्तालाप-प्रसङ्गे तु देवदत्त उवाच यत्।
प्रियङ्का-चोपड़ायास्तु चुम्बनं कामये पुनः।।

तस्य तद्वचनं श्रुत्वा यज्ञदत्तस्तु पृष्टवान्।
इतः पुराऽपि किं तस्याश्चुम्बनं प्रकृतं त्वया?।।

यज्ञदत्त-वचः श्रुत्वा देवदत्तो ब्रवीति यत्।
न हि भो! पूर्वमप्यासीत् केवलं कामनैव मे।।

•

## आज फाइनल मैच रहेगा

देवदत्त ने एक बार जाकर बोला डॉक्टर को।
गहरी नींद नहीं आती क्यों रात रात भर मुझको।।

सपने में मैं रोज देखता बानर बहुत निरन्तर।
खेल रहे फुटबॉल दिखाई देते बाहर अन्दर।।

देवदत्त की बातें सुनकर डॉक्टर ने कुछ गोली।
खाने को दे दिया जिसे उसने सहर्ष फिर ले ली।।

सोने से पहले यह गोली रोज एक है लेना।
सुनकर यह निर्देश तभी था देवदत्त का कहना।।

डॉक्टर साहब! आज रात यह गोली अभी न लूँगा।
कल से रोज निरन्तर लेना कभी नहीं छोड़ूँगा।।

देवदत्त की बातें सुनकर डॉक्टर ने तब पूछा।
आज नहीं क्यों लोगे गोली क्या कारण यह सूझा?।।

डॉक्टर के सवाल को सुन तब देवदत्त कहता है।
आज फाइनल मैच बन्दरों का होना निश्चित है।।

•

## पहले भी अभिलाषा

बातचीत में देवदत्त ने यज्ञदत्त को बोला।
पुनः प्रियङ्का के चुम्बन को मेरा मन है डोला।।

देवदत्त की बात सुनी तो यज्ञदत्त कहता है।
क्या इसके पहले भी चुम्बन उसका कभी लिया है?।।

यज्ञदत्त के इस सवाल पर देवदत्त की भाषा।
अरे! नहीं, पहले भी केवल चुम्बन की अभिलाषा।।

•

# सत्यवादी भावनेव

कश्चिद् दार्शनिकस्तावद् वस्तूनि क्रेतुम् आपणे।
गृहाद् विनिर्गतः शीघ्रं क्रीत्वा वस्तूनि चाऽऽगतः।।

यदा गृहे निवृत्तः स तदैव ज्ञातवांश्च यत्।
छत्रं तस्य न जाने क्व विलुप्तं चाऽऽपणे तदा।।

छत्रम् अन्वेष्टुकामः स पुनरेव तथाऽऽपणे।
प्रतिनिवृत्य तत्प्रष्टुम् आपणिकेषु सङ्गतः।।

षट्स्वापणेषु पृष्टेषु यदा छत्रं न लब्धवान्।
नैराश्यं स ततः प्राप्य सप्तमे चाऽऽपणे गतः।।

संयोगादथ छत्रं स ज्ञात्वा तत्र सुरक्षितम्।
आपणिकेन दत्तं च प्राप्य हृष्टमना अभूत्।।

आपणिकं तदा तत्र सप्तमं स तु हर्षितः।
धन्यवादं प्रयच्छन् स वचनं त्वेवम् अब्रवीत्।।

हट्टे चाऽस्मिन् भवानेव केवलं मां प्रतीयते।
शिष्टश्च सत्यनिष्ठश्च हितैषी च महान् यतः।।

इतः पूर्वम् अहं षट्सु चाऽऽपणेषु गतः परम्।
सर्वे मां प्रोक्तवन्तो यत् छत्रम् अत्र न विद्यते।।

परन्तु केवलं श्रीमन्! मध्ये हट्टस्य साम्प्रतम्।
सत्यवादी भवानेव विचारे प्रतिभाति मे।।

•

# आप अकेले सच्चे

एक दार्शनिक व्यक्ति गया बाजार खरीदारी करने।
कर पूरी खरीद लौटा फिर वस्तु सहित घर में अपने।।

जब घर आया तभी उसे कुछ ऐसा ही था भान हुआ।
उसका छाता छूट चुका है कहीं किसी दूकान जहाँ।।

छाते को खोजने हेतु जब वह पहुँचा बाजार वहाँ।
सभी जगह वह लगा पूछने दूकानों पर जहाँ तहाँ।।

पूछा वह छह दूकानों पर लेकिन छाता मिला नहीं।
हो निराश वह फिर तो पहुँचा जो दुकान सातवीं रही।।

यह भी था संयोग अन्ततः छाता उसको वहीं मिला।
उस दुकानदार से उसको बिलकुल भी थी नहीं गिला।।

तभी दार्शनिक व्यक्ति बहुत होकर हर्षित वह कहता है।
धन्यवाद देकर उसको कुछ यूँ बतलाता रहता है।।

पूरे इस बाजार में केवल आप अकेले हैं सच्चे।
शिष्ट और ईमानदार बाकी तो ये सब हैं कच्चे।।

इस छाते के लिए गया था मैं छः छः दूकानों में।
सबने छाता यहाँ नहीं कह लौटाया था तानों में।।

लेकिन केवल एक आप बाजार बीच में मिले मुझे।
जो ईमानदार लगते है सभी तरह पूरे सच्चे।।

•

## किं शोकस्य कारणम्?

कस्यचित् कृपणस्याऽथ पुत्रो दुर्घटनां गतः।
तत्रैकं चरणं तस्य भग्नं पूर्णतयाऽभवत्।।

चिकित्सकस्य पार्श्वे स चिकित्सार्थं यदा गतः।
चिकित्सकस्तु तं दृष्ट्वा कृपणं तम् उवाच यत्।।

क्षतिग्रस्तश्च पादोऽयं बहुशः प्रतिभाति मे।
शरीराद् अतएवाऽयं पृथक् कर्त्तव्य एव हि।।

चिकित्सक-वचः श्रुत्वा कृपणो बहु चिन्तितः।
समुद्विग्नो यदा जातस्तदा तत्र चिकित्सकः।।

कृपणं तम् उवाचैवं कथं त्वं बहु शोचसि?।
इदमेव तु पुत्रस्य कृते श्रेयस्करं तव।।

तच्छ्रुत्वा कृपणो ब्रूते ह्यस्तने दिवसे मया।
उपानहौ तु ये क्रीते तद् वै शोकस्य कारणम्।।

●

## वियुक्तः क्वाऽस्ति पञ्चमः?

स्वचालिते द्विचक्रे (मोटरसाइकिल) तु चत्वारो युवका यदा।
गच्छन्ति स्म यदा मार्गे वेगेन क्वचिदप्यहो!।।

मार्गे निरीक्षकाः केचित् संनिरुध्य चतुष्पथे।
द्विचक्रे चोपविष्टांस्तान् युवकान् एवमब्रुवन्।।

कथं यूयं हि चत्वारो गच्छथ? ब्रूत सत्वरम्।
त्रयाणामपि यानेऽस्मिन् गमनं परिवर्जितम्।।

तच्छ्रुत्वा तु युवानस्ते चत्वारोऽपि सविस्मयाः।
परस्परं समालोक्य साश्चर्यं विवदन्ति यत्।।

अहो! किं वयमत्र स्मः चत्वार एव साम्प्रतम्?।
पञ्चमस्तु सखाऽस्माकं वियुक्तः क्व प्रभो! ऽभवत्।।

●

## यही शोक का कारण

किसी एक कंजूस का लड़का दुर्घटना से ग्रस्त हुआ।
एक पैर जिसमें उसका था पूर्ण रूप से नष्ट हुआ।।

डॉक्टर के जब पास गया वह उसको ठीक कराने को।
उस कंजूस बाप से बोला डॉक्टर तब समझाने को।।

बुरी तरह यह पैर नष्ट है नहीं इसे रखने में हित।
सिवा काटने के है कोई और उपाय नहीं समुचित।।

सुनकर डॉक्टर की बातों को चिन्तित वह कंजूस हुआ।
परेशान फिर उसे देखकर डॉक्टर ने तब यही कहा।।

अरे! नहीं बेकार सोचते परेशान क्यों होते हो?।
इसमें ही है भला तुम्हारे बेटे का क्यों रोते हो?।।

डॉक्टर को कंजूस सेठ तब कारण यूँ बतलाता है।
जूता नया खरीदा उसका क्या हो समझ न आता है।।

•

## कहाँ पाँचवाँ छूटा?

हीरो हाण्डा पर सवार वे चार युवक थे जाते।
घर से निकले बड़े वेग से करें हवा में बातें।।

तभी पुलिस वालों ने उनको चौराहे पर टोका।
एक साथ बैठे देखा तो आँख दिखाया रोका।।

पूछा एक साथ कैसे हो चारों इस गाड़ी पर?।
तीन जनों का भी अवैध होता है चलना इस पर।।

उनकी बातें सुन चारों ने विस्मित हो मुँह खोला।
अचरज से फिर एक दूसरे का मुँह देखा बोला।।

हे भगवान्! चार ही हैं हम यह कैसे? क्या मानें?।
वह पाँचवाँ हमारा साथी छूटा कहाँ न जाने?।।

•

## स्वर्गता ट्रेनयानेन?

सप्त-पुत्र-जनन्यास्तु देहान्तः समभूद् यदा।
तदा ते तनयास्तस्याः बहुशोक-समन्विताः।।

रूदन्तो विलपन्तश्च युवानस्ते मुहुर्मुहुः।
कथयन्ति स्म वृद्धां तां निष्प्राणाम् अभिलक्ष्य यत्।।

अयि मातः! कथं चाऽस्मान् परित्यज्य सुतान् अहो!।
प्रयाताऽसि च संसारे न वयं स्थातुम् उत्सुकाः।।

अस्मानप्यात्मना सार्धं नयस्व कृपया मुहुः।
वयमप्यत्र नेतव्याः संसाराद् इति कामना।।

तांस्तु विलपतो वीक्ष्य बहुकालात् निरन्तरम्।
तेषां तद्वचनं श्रुत्वा किंचित् रोष-समन्वितः।।

प्रतिवेशी च संक्षुब्धो देवदत्तस्तदैव तान्।
सान्त्वयन् कारयन् तूष्णीम् एवं वचनमब्रवीत्।।

युष्माकं जननी किं सा ट्रेनयानेन प्रस्थिता?।
यदात्मना समं युष्मान् नीत्वा गन्तुं च शक्नुयात्।।

•

## भिक्षुत्वे हेतवः इमे

एकदा भिक्षुकः कश्चिद् देवदत्तम् उवाच यत्।
कृपया चलभाषे मे दश-रूप्यक-कूपनम्।।

ददातु कृपया स्वामिन्! शीघ्रमेव भवान् यतः।
वार्त्तालापं चिकीर्षामि कन्यामित्रेण (गर्ल फ्रेण्ड) वै समम्।।

तदाकर्ण्य वचस्तस्य देवदत्तो ब्रवीति यत्।
भिक्षुकैरपि किं तावत् कन्यामित्राणि धार्यते?।।

देवदत्त-वचः श्रुत्वा भिक्षुकः प्रत्युवाच यत्।
मित्रत्वादेव कन्यानां भिक्षुकत्वम् अवाप्तवान्।।

•

## स्वर्ग गई क्या ट्रेनयान से?

सात पुत्र जिसके थे ऐसी माँ का जब देहान्त हुआ।
सातों विलख उठे जोरों से शोक दुःख एकान्त हुआ।।

फूट फूट कर रोते और बिलखते माता के शव से।
बोल रहे थे उसको सम्बोधित कर वे सब जोरों से।।

ए माँ! हमको छोड़ अकेली तुमने क्यों प्रस्थान किया?।
तुम बिन यहाँ हमारा अब तो कुछ भी लगता नहीं जिया।।

कृपया अपने साथ हमें भी लिए चलो इस धरती से।
नहीं कामना है रहने की ऊब गया मन जगती से।।

उनको रोता देख निरन्तर बहुत देर तक सहन किया।
पड़ोसियों ने सुन लम्बा विलाप उनका कुछ मनन किया।।

देते हुए सान्त्वना उनको चुप व शान्त कराता है।
एक पड़ोसी देवदत्त यूँ क्षुब्ध-भाव समझाता है।।

अजी! ट्रेन पर हो सवार क्या गई तुम्हारी माता जी।
जो तुम सबको साथ लिये वे दुनिया से थीं जा सकती?।।

•

## इनके ही कारण बना भिखारी

एक बार भिखमंगा बोला देवदत्त से कोई।
दस रुपये का कूपन मेरे मोबाइल में भाई!।।

कृपा करें डलवा दें साहब! हमें बात है करनी।
अपने गर्ल-फ्रेण्ड से जल्दी बात जरूरी कहनी।।

उस भिक्षुक की बात सुनी तब देवदत्त कहता है।
अचरज है भिखमंगा भी क्या गर्लफ्रेण्ड रखता है?।।

सुन ये बात कहा भिक्षुक ने मानें बात हमारी।
गर्ल-फ्रेण्ड्स के कारण ही तो देखो बना भिखारी।।

•

## समागच्छामि पृष्ठतः

कश्चिद् यात्री यदा रिक्शा-यान-चालकमाह यत्।
रेलवे-स्टेशनस्याऽत्र भाटकं वर्त्तते कियत्?।।

तस्य प्रश्नं समाकर्ण्य रिक्शा-चालक आह यत्।
रूप्याणि विंशतिस्तावत् तत्रत्यं भाटकं भवेत्।।

तस्य तद्वचनं श्रुत्वा यात्री स पुनराह यत्।
मम पार्श्वे तु वर्त्तन्ते वस्तून्यत्र बहूनि च।।

यात्रिणो वचनं श्रुत्वा चालकः प्रत्युवाच यत्।
वस्तूनि तानि निःशुल्कं प्रापयिष्यामि सर्वथा।।

रिक्शा-संचालकस्यैवम् आकर्ण्य वचनं तदा।
किंचिद् विचारयंस्तत्र यात्री स प्रत्युवाच यत्।।

अस्तु, वस्तूनि नीत्वा त्वं स्टेशनं प्रापयस्व मे।
त्वत्पृष्ठतः पदातिश्च समागच्छामि साम्प्रतम्।।

•

## न तथा भविता किञ्चित्

भाटकेन गृहं तावत् प्राप्तुकामो जनो यदा।
गृहस्य स्वामिनं तत्र देवदत्तं तु पृष्टवान्।।

श्रूयते ते गृहे चाऽस्मिन् भूताः सन्त्रासदायकाः।
पीडयन्ति सदा रात्रौ केचिद् व्याकुलयन्ति च।।

तस्य तद्वचनं श्रुत्वा देवदत्तः सुविस्मितः।
मन्दं मन्दं विहस्यैवम् पुरुषं प्रत्युवाच यत्।।

सत्यमेव श्रुतं किन्तु विशिष्टं तत्र चाऽस्ति यत्।
तदप्यत्र विजानीहि रहस्यं कथयाम्यहम्।।

भाटकं नियते काले यदि दीयेत वै तदा।
भविता न तथा किञ्चित् यथा सर्वं श्रुतं त्वया।।

•

## तेरे पीछे आऊँ

किसी एक यात्री ने पूछा रिक्शेवाले से इतना।
कहो रेलवे स्टेशन का भाड़ा तुम लोगे कितना?।।

सुनकर उसका प्रश्न बोलता है रिक्शेवाला उससे।
लूँगा बीस रुपैया भाड़ा स्टेशन का मैं तुमसे।।

उसका उत्तर सुनकर यात्री पुनः उसे बतलाता है।
कुछ सामान साथ भी है जो ले चलना समझाता है।।

रिक्शेवाला कहता है यात्री की बातों को सुनकर।
वह सारा सामान साथ ही मुफ्त ले चलूँ रिक्शे पर।।

रिक्शेवाले की वह यात्री इस प्रकार बातें सुनकर।
कुछ विचार कर बोल उठा यूँ धीरे धीरे मुसकाकर।।

यह सामान मुफ्त में कृपया स्टेशन तक पहुँचाओ।
इसके पीछे मैं पैदल ही चल लूँगा अब तुम आओ।।

●

## वैसा कुछ भी घटित न हो

भाड़े पर मकान लेने को एक आदमी कोई।
देवदत्त मालिक-मकान से पूछ लिया था यों ही।।

भूत-प्रेत आपके मकान में लोग बोलते हमको।
रात सदा ही परेशान करते रहते हैं सबको।।

देवदत्त तब बातें सुनकर उस व्यक्ति की ऐसी।
मन्द मन्द मुसकाता बोला करता हुआ हँसी सी।।

ठीक सुना है, बात यहाँ पर एक विशिष्ट बहुत है।
यह भी सुन लें कृपया देकर ध्यान बात अद्‌भुत है।।

यदि कोई इसका भाड़ा दे देता ठीक समय पर।
ऐसा कुछ भी घटित न हो विश्वास कीजिए मुझ पर।।

●

## समयं यापयाम्यहम्

विवाहस्य समारोहे कस्मिंश्चिद् एकदा यदा।
यज्ञदत्तः समागत्य तत्र स दृष्टवांश्च यत्।।

देवदत्तः सखा तस्य घण्टापूर्वं समागतः।
प्रारभ्य भोजनं तत्र तदाऽपि भोजने रतः।।

भुञ्जानं तं तथा वीक्ष्य यज्ञदत्तस्तु पृष्टवान्।
कदा पर्यन्तमत्रैवं भोजनं ते समाप्स्यते?।।

यज्ञदत्तवचः श्रुत्वा देवदत्तो ब्रवीति यत्।
भोजनं त्वहमप्यत्र समाप्तुं कामये परम्।।

निमन्त्रणस्य पत्रे तु समयो लिखितोऽस्ति यत्।
दश-वादनपर्यन्तम् आरभ्य चाऽष्टवादनात्।।

भोजनस्याऽस्ति कालस्तद् भुञ्जानोऽहं मुहुर्मुहुः।
तमेव समयं पूर्णं यापयामि यथा तथा।।

•

## यन्त्रं सञ्चाल्यते तदा

वार्त्तालाप-प्रसङ्गे तु भाषमाणो मुहुर्मुहुः।
यज्ञदत्तः सखायं स्वं देवदत्तम् उवाच यत्।।

शीतकाले यदा शैत्यम् अधिकं ते प्रतीयते।
तदा करोषि किं मित्र! ज्ञातुमिच्छामि साम्प्रतम्।।

यज्ञदत्त-वचः श्रुत्वा देवदत्तो ब्रवीति यत्।
उष्म-कारक-(हीटर) यन्त्रस्य समक्षम् उपविश्यते।।

ततोऽप्यथ न ते शैत्यं निवृत्तं स्यात् पुनस्तदा।
किं करोषि च शैत्यस्य वारणाय? गृहे स्थितः।।

सख्युस्तत्प्रश्नमाकर्ण्य देवदत्तो ब्रवीति यत्।
ततोऽहम् ऊष्मयन्त्रं तत् शीघ्रं संचालये सखे!।।

•

## पूरा समय बिताता हूँ

एक बार शादी-दावत में यज्ञदत्त था गया हुआ।
देखा उसने पहले से था देवदत्त भी डटा हुआ।।

वह घण्टे भर पहले आया और खा रहा था भोजन।
और'अभी भी जाते देखा भोजन पर ही था आसन।।

पूछा उसने देवदत्त से कब तक यूँ ही खाओगे?।
इतनी देर हो गई भोजन करते कब घर जाओगे?।।

यज्ञदत्त की बातें सुनकर देवदत्त बतलाता यूँ।
भोजन समाप्त करके घर को चाह रहा मैं भी जाऊँ।।

लेकिन यहाँ निमन्त्रण में है भोजन का जो मुझे दिखा।
आठ बजे से रात दस बजे तक का इसमें समय लिखा।।'

इसीलिए इस भोजन के टाइम को यहाँ बिताता हूँ।
आठ बजे से रात दस बजे तक मैं पूरा खाता हूँ।।

•

## हीटर का स्विच ऑन करूँ

बातचीत में एक बार यूँ यज्ञदत्त ने पूछ लिया।
देवदत्त से जिज्ञासा में सीधा सादा प्रश्न किया।।

जाड़े में जब ठंढ अधिक है लगती तब क्या करते हो।
यही जानना चाह रहा मैं कैसे ठंढ भगाते हो?।।

यज्ञदत्त की बातें सुनकर देवदत्त ने कहा यही।
तब तो मैं हीटर के आगे बैठा करता बात सही।।

फिर भी अगर ठंढ ना जाए बोलो तब क्या करते हो।
यही जानना चाहूँ फिर मैं कैसे ठंढ भगाते हो?।।

उसकी ऐसी बातें सुनकर देवदत्त यूँ कहता है।
हीटर का स्विच ऑन करूँ तब शीत दूर हो जाता है।।

•

## तत्पत्रं प्राप्तमेव न

चिकित्सको यदाऽगच्छत् सम्प्रमत्तालये यदा।
दृष्टवान् स च तत्रैकः प्रमत्तो ध्यानपूर्वकम्।।

पत्रस्य लेखने तावत् निमग्नो बहु वर्त्तते।
पृष्टवान् स्मयमानः स प्रमत्तं विहसन् तदा।।

कथं भो! पत्रमेतत् त्वं कं प्रेषयसि साम्प्रतम्।
तदहं ज्ञातुमिच्छामि किं च लिखसि तत्र च?।।

चिकित्सक-वचः श्रुत्वा प्रमत्तः स ब्रवीति यत्।
आत्मानमेव पत्रं स प्रेषयामि महोदय!।।

तस्योत्तरं समाकर्ण्य चिकित्सक उवाच यत्।
तत्र किं लिखितं तावद् वर्त्तते ब्रूहि माम् इति।।

तस्य प्रश्नं समाकर्ण्य प्रमत्तः सोऽब्रवीत् पुनः।
नैव जानाम्यहं तत्र पत्रे किं लिखितं भवेत्।।

तस्योत्तरं समाकर्ण्य पृष्टवान् स चिकित्सकः।
अहो! कथं न जानासि यत् पत्रे लिखितं हि किम्।।

चिकित्सक-वचः श्रुत्वा प्रमत्तः स ब्रवीति यत्।
तत्पत्रम् अधुना यावत् प्राप्तमेव न वर्त्तते।।

•

## स्वतः सुरभितं गृहम्

सुगन्धवर्तिकानां तु विक्रेता तत्परो यदा।
वर्त्तिकायाः प्रशंसायां महिलामेवमाह यत्।।

तथा तीव्रसुगन्धेयं वर्त्तिका वर्त्तते यथा।
भवत्याः प्रतिवेशिन्या गेहोऽपि स्यात् सुगन्धितः।।

विक्रेतुर्वचनं श्रुत्वा महिला तमुवाच यत्।
विक्रेतव्या तदा गत्वा प्रतिवेशि-गृहेषु सा।।

•

## पत्र अभी तक मिला नहीं

पागलखाने का डॉक्टर जब आया पागलखाने में।
देखा एक अकेला पागल लगा हुआ कुछ लिखने में।।

पूछा उसने पागल से तुम ध्यानमग्न क्या करते हो?।
लगता है कोई चिट्ठी तुम किसी व्यक्ति को लिखते हो।।

अच्छा बोलो किस व्यक्ति को चिट्ठी भेज रहे तुम हो।
यही जानना चाह रहा मैं क्या चिट्ठी में लिखते हो?।।

डॉक्टर की ये बातें सुनकर पागल वह बतलाता है।
मैं तो चिट्ठी अपने को ही भेज रहा समझाता है।।

उत्तर उसका सुन डॉक्टर ने उससे यूँ पूछता भला।
चिट्ठी में क्या लिख डाला है हमको भी कुछ तो बतला।।

डॉक्टर के सवाल को सुनकर पागल यह बतलाता है।
चिट्ठी में क्या लिखा हुआ है हमको समझ न आता है।।

सुनकर उसकी बातें डॉक्टर ने फिर उससे यूँ पूछा।
अरे! लिखा उस चिट्ठी में क्या यह तुमको भी नहीं पता?।।

डॉक्टर का यह सुन सवाल उस पागल ने फिर कहा यही।
क्या बतलावें डॉक्टर जी! वह पत्र अभी तक मिला नहीं।।

•

## मेरा घर भी महके

अगरबत्तियों का विक्रेता वस्तु बेंचने जब जाता।
कभी किसी महिला को अपनी बातों से यूँ समझाता।।

अगरबत्तियाँ हैं ऐसी जो घर में इन्हें जलाएँगी।
और पड़ोसन के घर को भी निश्चित ये महकाएँगी।।

सुन विक्रेता की बातें तब महिला है कहती उससे।
उसी पड़ोसन को बेचो मेरा भी घर महके जिससे।।

•

## निरुद्धं पेंशनं वित्तम्

काचिद् वृद्धा यदाऽस्वस्था व्याधिग्रस्ता च रोगिणी।
चिकित्सागृहम् आगत्य चिकित्सार्थं न्यवेदयत्।।

चिकित्सकोऽपि तां दृष्ट्वा तन्मनोबल-वर्धने।
प्रदर्शयन् समुत्साहं वृद्धाम् एवम् उवाच यत्।।

तथा तव करिष्यामि चिकित्सां रुचि-पूर्वकम्।
औषधं च प्रदास्यामि सर्वथाऽऽरोग्यवर्धनम्।।

यथा त्वं सद्य एवाऽत्र स्वस्था भूत्वा च पूर्णतः।
युवत्वं च पुनः प्राप्य गृहे सम्मोदमाप्स्यसि।।

चिकित्सक-वचः श्रुत्वा दुःखिता बहुचिन्तिता।
समुद्विग्नेन चित्तेन वृद्धा सा वैद्यमब्रवीत्।।

अरे! नैवं हि कर्त्तव्यं कामये नैव यौवनम्।
अन्यथा पेंशनं वित्तं मम रुद्धं भविष्यति।।

•

## व्यर्थव्ययी भवादृशः

एकदा भिक्षुकः कश्चिद् देवदत्तम् अयाचत।
दयार्द्रः स तदा तस्मै शतं रूप्याणि दत्तवान्।।

दत्त्वा च तमपृच्छद् यत् कथमेषा दशा तव?।
बभूवेति मदीयाऽस्ति जिज्ञासा तत्र मां वद।।

तस्य तत्प्रश्नमाकर्ण्य भिक्षुकः प्रत्युवाच यत्।
व्यर्थ-व्ययम् अहं चाऽपि करोमि स्म भवादृशः।।

•

## पेंशन कैसे पाऊँ?

अस्पताल में कोई रोगी बूढ़ी महिला आई।
डॉक्टर से अपना इलाज करने को बात बताई।।

डॉक्टर ने उसको देखा फिर शीघ्र स्वास्थ्य पाने को।
मन में जोश बढ़ाते बोला सादर उस बुढ़िया को।।

हों बिलकुल निश्चिन्त आपको ऐसी औषध दूँगा।
शीघ्र ठीक हो जाएँगी मैं उचित इलाज करूँगा।।

पूरी तरह ठीक हो करके घर में मौज करेंगी।
नई जवानी प्राप्त करेंगी बूढ़ी नहीं रहेंगी।।

डॉक्टर की बातों को सुनकर वह बुढ़िया घबराई।
चिन्तित परेशान कुछ होकर यूँ फिर बात बतायी।।

अरे! नहीं ऐसा कुछ करना नहीं जवानी चाहूँ।
यदि ऐसा हो जाये तो फिर पेंशन कैसे पाऊँ?।।

•

## ऐसे ही फिजूल खर्चा

कोई एक भिखारी माँगा देवदत्त से जब पैसे।
दयावान् हो उसने सौ का नोट दिया उसको जैसे।।

रुपये देकर पूछा उसने दशा हुई क्यों कर ऐसी?।
यही जानना चाह रहा मैं बतलाओ हो भी जैसी।।

प्रश्न सुना जब भिक्षुक ने तो उत्तर में की यूँ चर्चा।
मैं भी आप सदृश करता था ऐसे ही फिजूल खर्चा।।

•

## मां सम्बोध्य न तद् वाक्यम्

एकदा देवदत्तस्तु यज्ञदत्तेन वै समम्।
स्वीय-शल्य-चिकित्सार्थं चिकित्साभवने गतः।।

किञ्चित्काले व्यतीते च यज्ञदत्तस्तु दृष्टवान्।
देवदत्तः सखा तस्य शल्य-कक्षात् पलायते।।

पलायमानं तं दृष्ट्वा यज्ञदत्तोऽपि सत्वरम्।
तस्याऽनुगमनं कृत्वा तत्समीपम् उपागतः।।

आगत्य देवदत्तं च विस्मितः पृष्टवान् स यत्।
पलायनस्य किं तत्र कारणं ब्रूहि सत्वरम्?।।

तस्य तत्प्रश्नमाकर्ण्य देवदत्तो ब्रवीति यत्।
मया चैतत् श्रुतं तत्र वक्ति शल्य-सहायिका।।

"उद्विग्नः किं भवान् अत्र स्विन्नगात्रश्च दृश्यसे?।
साधारणी क्रिया चैषा शल्यस्य तव जीवने"।।

देवदत्त-वचः श्रुत्वा यज्ञदत्तो ब्रवीति यत्।
परं पलायनस्यैतत् विशिष्टं ते न कारणम्।।

तस्य तद् वचनं श्रुत्वा देवदत्तो ब्रवीति यत्।
अरे! मूर्ख! न किं ज्ञातं रहस्यम् इह तच्छृणु।।

मां सम्बोध्य न तत् सर्वं वाक्यं कथयति स्म सा।
चिकित्सकं समुद्दिश्य तद् वाक्यं न्यगदत् तदा।।

# नहीं कहा मुझको लक्षित कर

एक बार था देवदत्त जब यज्ञदत्त के साथ गया।
अपनी ही सर्जरी कराने अस्पताल जो बना नया।।

अभी समय कुछ ही बीता तो यज्ञदत्त यह देख रहा।
देवदत्त जो उसका साथी शल्य-कक्ष से भाग रहा।।

उसको देख भागते उसके जल्दी से पीछे पीछे।
यज्ञदत्त भी दौड़ा आया वैसे ही सीधे-सीधे।।

आकर के उसके समक्ष कुछ अचरज से था पूछ रहा।
वहाँ भागने का क्या कारण यही जानना चाह रहा।।

यज्ञदत्त का सुन सवाल तब देवदत्त बतलाता है।
कहा नर्स ने वाक्य वहाँ जो उसको ही दुहराता है।।

"परेशान हो व्यर्थ आप क्यों देह पसीने से भींगी।
जीवन में क्या नहीं जानते अजी! सर्जरी छोटी सी"।।

देवदत्त की बात सुनी तब यज्ञदत्त ने कहा यही।
कारण यहाँ भागने का क्या? मैं कुछ समझा अभी नहीं।।

सुनकर बातें यज्ञदत्त की देवदत्त बतलाता है।
अरे! मूर्ख कुछ अकल नहीं क्या? फिर उसको समझाता है।।

कहा नर्स ने बात वहाँ जो वह मुझको थी नहीं कही।
डॉक्टर से वह बोल रही थी अब तो समझो सही सही।।

•

# दृष्टस्त्वया प्रभावो मे?

द्विवादने तु गच्छन्तं निशि चैकाकिनं यदा।
विलोक्य देवदत्तं तम् आरक्षी पुरुषः क्वचित्।।

पप्रच्छ तं कठोरेण यत् ते नाम किमस्ति भो!।
एतावत्यां निशायां च कुत्र ते गमनं तथा?।।

प्रश्नम् आरक्षिणः श्रुत्वा देवदत्तः ससम्भ्रमः।
किञ्चित् तत्र भयाऽऽक्रान्तः सादरं प्रत्युवाच यत्।।

नाम्नाऽहं कालिदासोऽस्मि संस्कृतस्य कविस्तथा।
साम्प्रतं पठनार्थं च गच्छामि पुस्तकालये।।

तच्छ्रुत्वा रोषमापन्नो देवदत्तं विभीषयन्।
गम्भीरेण स्वरेणैवम् आरक्षी निजगाद यत्।।

भद्रमिच्छसि चेत् सत्यं ब्रूहि मे पुरतोऽधुना।
किं च ते नामधेयं स्यात् करोषि किं च साम्प्रतम्?।।

तस्य तद्वचनं श्रुत्वा देवदत्तः शनैः शनैः।
भयाक्रान्तेन भावेन तम् आरक्षिणम् आह यत्।।

वस्तुतः प्रेमचन्दोऽहम् मुंशीति नाम-पूर्वकः।
अहमेव च 'गोदानम्' उपन्यासं लिलेख च।।

आकर्ण्य तस्य तद्वाक्यम् आरक्षी स्वसहायकम्।
विहस्य प्रोक्तवान् एवं तत्र यः समुपस्थितः।।

दृष्टस्त्वया प्रभावो मे? विदितं पूर्वमेव यत्।
असत्यं पुरुषाश्चाऽयं ब्रवीति निश्चितं परम्।।

एकेनैव हि वाक्येन भयस्योत्पादकेन मे।
तत्क्षणम् एव सत्यं स वक्तुं प्रारब्धवान् नरः।।

●

# देखा मेरा क्या प्रभाव है?

रात दो बजे सड़क अकेले देवदत्त को जाते देखा।
तभी पुलिसवाले ने उसको टोका और उसी क्षण रोका।।

फिर कठोर लहजे में पूछा नाम तुम्हारा क्या है बोलो?।
इतनी रात कहाँ जाते हो? कहाँ भटकते हो मुँह खोलो?।।

सुन सवाल उस पुलिस मैन का देवदत्त हड़बड़ा गया फिर।
डरकर परेशान होकर यूँ आदर सहित जवाब दिया फिर।।

कालिदास है नाम हमारा मैं संस्कृत का कवि महान् हूँ।
पढ़ने हेतु पुस्तकालय में अभी जा रहा नौजवान हूँ।।

देवदत्त की बातें सुनकर गुस्से में उसको धमकाया।
पुनः पुलिसवाले ने पूछा रोषपूर्ण हो आँख दिखाया।।

अपना अगर भला चाहो तो सत्य बोलना सही बताना।
नाम तुम्हारा सच में क्या है? और कहाँ है तुमको जाना?।।

बातें सुनकर उसकी ऐसी देवदत्त तब धीरे धीरे।
बोला पुनः पुलिसवाले से दबा दबा कुछ डर के मारे।।

मैं वास्तव में प्रेमचन्द मुंशी हूँ ये ही नाम हमारा।
उपन्यास 'गोदान' लिखा हूँ जान रहा यह तो जग सारा।।

उसकी ऐसी बातें सुनकर थोड़ा हँसा पुलिसवाला वो।
अपने असिस्टेन्स से बोला पास खड़ा था वहीं साथ जो।।

देखा तुमने क्या प्रभाव है मैं पहले ही जान गया था।
झूठ आदमी बोल रहा है निश्चित यह मैं मान गया था।।

लेकिन सुनकर घुड़की मेरी एक जरा सी घबड़ाया वह।
लगा बोलने सच सच सारा सही बात फिर मान गया वह।।

•

## वृक्कस्ते चोरितो न हृद्

सम्पन्ने शल्यकृत्ये च देवदत्तो यदा ततः।
निःसार्य शल्यकक्षात् स कक्षेऽन्ये सम्प्रवेशितः।।

तन्मध्ये सुन्दरीम् एकां दृष्ट्वा स परिचारिकाम्।
उक्तवान् सहसा तस्याः प्रेम्णि सम्पतितस्तदा।।

अहो! त्वं रूप-सम्पन्ना सुन्दरी मदिरेक्षणा।
मदीयं हृदयं नूनं साम्प्रतं चोरितं त्वया।।

तस्य तद्वचनं श्रुत्वा तत्र सा परिचारिका।
मन्दं मन्दं विहस्यैवं रहस्यं सत्यमाह यत्।।

न हि भो! हृदयं नैव चोरितम् आतुरालये।
अस्माभिर्गुप्तरूपेण वृक्क एकस्तु चोरितः।।

●

## अहं ते भाविनी वधूः

एकदा पञ्चवर्षीया बालिका काचिद् अब्रवीत्।
कमप्यापणिकं हट्टे तत्र मधुरया गिरा।।

यदाऽहं युवती तावद् भवेयं किं तदा भवान्।
मया समं स्वपुत्रस्य विवाहं कारयिष्यति?।।

तस्यास्तद् वचनं श्रुत्वा विहस्याऽऽपणिकोऽपि सः।
बालिकाम् अब्रवीदेवं कारयिष्यामि पुत्रिके!।।

तस्य तद्वचनं श्रुत्वा बालिका सस्मिताऽऽनना।
मन्दं मन्दं विहस्यैवम् आपणिकं जगाद यत्।।

अस्तु तर्हि भवान् एकं चाकलेटं ददातु मे।
हृष्टतापूर्वकं श्रीमन्! यतोऽहं भाविनी वधूः।।

●

# किडनी एक चुराई है

देवदत्त की हुई सर्जरी शल्य-कक्ष से शिफ्ट किया।
किसी दूसरे और वार्ड में उसको भर्ती किया गया।।

इसी बीच सुन्दर सी नारी नर्स रूप में रही वहाँ।
उसके प्रेम-पाश में डूबा देवदत्त ने यही कहा।।

तुम मतवाली नेत्रों वाली कितनी सुन्दर नारी हो।
निश्चित ही तुमने दिल मेरा चुरा लिया मदधारी हो।।

उसकी बातों को सुन करके नर्स वहाँ पर यह बोली।
मन्द मन्द मुसकाकर उससे इस रहस्य को तब खोली।।

अजी! आपके दिल पर मेरी नजर नहीं ललचाई है।
हमने गुप्त रूप से किडनी केवल एक चुराई है।।

•

# बहू तुम्हारी होने वाली?

पाँच वर्ष की छोटी बच्ची एक बार यूँ बोली।
किसी दुकानदार से मीठा मुसकाकर वह भोली।।

अंकल! कहिए अगर कहीं हम खूब बड़ी हो जाएँगें।
अपने लड़के के संग मेरी शादी आप कराएँगे?।।

सुन प्यारी उसकी बातें वह दुकानदार भी कहता है।
बिटिया करवा दूँगा शादी मेरा भी जी करता है।।

बच्ची फिर हँसकर उससे यह प्रेम भाव दिखलाती है।
मन्द मन्द मुसकाकर उसको धीरे से समझाती है।।

अच्छा तो फिर हमें खुशी से एक चाकलेट दे दो।
मैं तो बहू तुम्हारी होने वाली ज्यादा मत सोचो।।

•

## निरुद्धोऽहं सुरागृहे

निशायां पुरुषः कश्चिद् द्वादशे वादने यदा।
सुरा-गृहस्य पप्रच्छ स्वामिनं चल-भाषणे।।

कदा सुरागृहं तावद् भवेद् उद्घाटितं प्रभो!।
तदहं ज्ञातुमिच्छामि कृपया सूचयेद् भवान्।।

तस्य तत्प्रश्नमाकर्ण्य स्वामी तं प्रत्युवाच यत्।
दश-वादन-पर्यन्तम् एतद् उद्घाटितं भवेत्।।

किञ्चित् काले व्यतीते च पुनः स पृष्टवान् यदा।
तदापि स गृहस्वामी तदेव चोत्तरं ददौ।।

तृतीयं वारमेवं हि चतुर्थं वारमेव च।
यदा स पुरुषस्तं च तथैव पृष्टवान् तदा।।

क्षुब्धः सुरागृहस्याऽथ स्वामी तं प्रत्युवाच यत्।
कथं ते बहुधा प्रश्नः? किम् इच्छसि त्वम् अन्ततः?।।

तस्य प्रश्नं समाकर्ण्य पुरुषो व्याकुलस्तदा।
समुद्विग्नमनास्तत्र सुरा-स्वामिनमाह यत्।।

वस्तुतोऽहं निरुद्धोऽस्मि भवदीये सुरागृहे।
शीघ्रम् इतश्च निःसार्य मद्गृहं प्रापयेद् भवान्।।

•

## उत्कोच आय-वर्धनः

उत्कोच-ग्रहणं तावद् अन्यायः कथ्यते बुधैः।
तदेतद् वचनं श्रुत्वा देवदत्तो ब्रवीति यत्।।

उत्कोच-ग्रहणं सत्यम् अन्यः आयः सदा मतः।
एतन्महार्घताकाले आय-वृद्धिः सुखप्रदा।।

•

## बन्द शराब-घर में हूँ

बारह बजे न जाने किसको रात कहीं क्या सूझा।
मोबाइल पर शराब-घर के मालिक को यूँ पूछा।।

कितने बजे दुकान खुलेगी साहब! आप बतायें।
यही जानना चाहा कृपया सूचित हमें करायें।।

सुन उसकी बातें मालिक ने तब उसको बतलाया।
यही सबेरे दस तक खुल जाएगी यूँ समझाया।।

थोड़ी देर बाद ही उसी ने प्रश्न यही दुहराया।
यही दिया उत्तर मालिक ने दस ही बजे बताया।।

यही प्रश्न तीसरी तथा चौथी बारी जब पूछा।
झुँझलाए शराब-घर के मालिक ने उलटा पूछा।।

एक प्रश्न ही बात बार तुम कैसे क्यों करते हो?।
चाह रहे क्या हो? मुझसे ना साफ साफ कहते हो?।।

शराब-घर के मालिक की यह बात सुनी उसने जब।
व्याकुल परेशान सा होकर बात कही उसने तब।।

वास्तव में मैं बन्द हो गया शराब-घर के अन्दर।
जल्दी से निकाल कर मुझको पहुँचा दे अपने घर।।

•

## अन्य आय सुख देगी

'घूस' अजी लेना निश्चित अन्याययुक्त है कहलाता।
सुन करके यह बात पते की देवदत्त यूँ बतलाता।।

अजी 'घूस' यह "अन्य-आय" है मैं भी यही मानता हूँ।
महँगाई में 'अन्य-आय' सुख देगी यही जानता हूँ।।

•

## नैव सख्ये दृढत्वम्

शत्रूणां शत्रुभावं कथमपि भुवने न त्वहं चिन्तयामि,
तज्जन्यं हानितत्त्वं न च मनसि कदाप्यत्र वा धारयामि।
दुःखं किन्त्वत्र तीव्रं मम मनसि मतं साम्प्रतं सुहृदां नः,
प्राबल्यं वा दृढत्वं क्वचिदपि न कथं दृश्यते मित्रतायाम्?।।

•

## दम नहीं मित्रता में

नहीं शत्रुता की चिन्ता मैं कभी शत्रुओं की करता हूँ,
उनसे हानि परेशानी को ना कुछ भी मन में रखता हूँ।
दुःख यही पर मेरे मन में प्यारे मित्रों की मैत्री में,
दृढ़ता नहीं दिखाई पड़ती और नहीं कुछ भी दम उसमें।।

•

# अभिनवरसोत्पत्ति-मीमांसा

*भूमिका*

ज्ञात्वा सम्यग् रसोत्पत्तिं रससिद्धाः कवीश्वराः।
रसातलं न प्राप्स्यन्ति सरहस्यं तदुच्यते।।

रसा इमे रमन्ते वै प्रायशः स्त्रीजनेष्विह।
प्राज्ञैस्तस्माद् इयं नारी रमणीति निगद्यते।।

रसानां विविधानां च नारीष्वेवोद्भवो मतः।
तदहं कीर्त्तयाम्यत्र नाऽत्र नारी-निरादरः।।

*शृङ्गाररसः*

कृत्वा षोडशधा देहे शृङ्गारं याति षोडशी।
यदा चित्रालये क्वाऽपि विश्वविद्यालयेऽथवा।।

तद् विलोक्य तथा यूनां मानसं चलितं यदा।
तस्मिन् काले रसोत्पत्तिः शृङ्गारस्य प्रवर्त्तते।।

*वीररसः*

रात्रौ गेहे पतिर्नित्यं यदाऽऽयाति विलम्बितः।
तद्दृष्ट्वा रमणी काचिद् रोषफूत्कारसंयुता।।

कर्मभिश्च वचोभिश्च यदा धर्षयते पतिम्।
प्रादुर्भावो रसस्य स्यात् तदा वीरस्य निश्चितम्।।

*रौद्ररसः*

कयाऽपि कन्यया सार्धम् अकस्माद् रमणी यदा।
पतिम्पश्यति हट्टेषु पथि चित्रालयेऽथवा।।

तदा तस्या रमण्यास्तु यो व्यापारः प्रवर्त्तते।
तमेव पण्डिताः केचिद् रसं रौद्रं प्रचक्षते।।

# रसोत्पत्ति की अभिनव-मीमांसा

### *भूमिका*

होता काव्य--रसों का उद्भव कैसे यदि कवि जानें।
नहीं रसातल उन्हें मिले कहता रहस्य यह मानें।।

प्रायः सारे रस निश्चित नारी समाज में रमते।
इसीलिए विद्वान् सभी नारी को रमणी कहते।।

सभी रसों की उत्पत्ति है नारी बीच सदा ही।
इसीलिए लिखता हूँ कोई निन्दा नहीं यहाँ की।।

### *शृङ्गाररस*

कर सोलह शृङ्गार यहाँ कोई सुन्दरी कुमारी।
जब विद्यालय में जाती या फिल्म देखने जाती।।

उसे देखकर युवकों का जब मन चंचल होता है।
रस शृङ्गार वहाँ तत्क्षण उत्पन्न तभी होता है।।

### *वीररस*

रोज रात जब बहुत देर से पति घर में है आता।
उसे देख पत्नी फुफकारे गुस्सा नहीं समाता।।

वाणी और कर्म से पति को सीधे धमकाती है।
वहाँ वीर-रस की उत्पत्ति तब निश्चित होती है।।

### *रौद्ररस*

पति को किसी सुन्दरी के संग कभी अकेले देखे।
कहीं मार्ग में या दुकान में तथा सिनेमा घर में।।

रमणी का तदनन्तर जो बर्ताव देखते हम हैं।
उसकी गिनती रौद्र रसों में पण्डित जन करते हैं।।

*करुणरसः*

षट्त्रिंशद्वर्षदेशीया काऽपि नारी यदा क्वचित्।
इङ्गितैश्चेष्टितैस्तत्र स्वकीयैर्युव-मध्यगा।।

आत्मानं षोडशीमेव प्रदर्शयितुम् ईहते।
करुणस्य रसस्य स्यादुत्पत्तिर्हृदये तदा।।

*बीभत्सरसः*

पतिभक्तिम् असत्कृत्य लोकलज्जाभयं तथा।
इयं पतिव्रता नारी निजाय प्रेमिणे यदा।।

समर्पयति सस्नेहं शरीरं सुविभूषितम्।
बीभत्सोऽयं रसस्तत्र हृदि कस्य न जायते?।।

*भयानकरसः*

कटिप्रदेशे रोषेण कृत्वा वस्त्राऽञ्चलं मुहुः।
अनर्गलं निजां श्वश्रूं भाषमाणा च भामिनी।।

गृहक्षेत्रे कुरुक्षेत्रे युद्धायाऽऽह्वयते यदा।
भयानकस्य स्यात्तत्र समुत्पत्ती रसस्य वै।।

*हास्यरसः*

असन्तुष्टा च केनाऽपि कारणेन यदा पतिम्।
'मातुर्गेहं गमिष्यामि सम्प्रत्यद्यैव निश्चितम्'।।

इत्येवं वक्ति बहुधा न च गच्छति भामिनी।
तदा हास्यरसस्तत्र स्वयमेव हि जायते।।

*वात्सल्यरसः*

स्वहस्तनिर्मितं स्वादु भोजनं बहुव्यञ्जनम्।
स्टीलपात्रे समाहृत्य स्नेहाऽऽग्रहपुरःसरम्।।

भोजनाय पतिं चैषा बाधते बहुशो यदा।
वात्सल्यरस एवाऽयं स्वयमाविरभूत् तदा।।

*करुणरस*

युवकों के संग बैठी जो छत्तीस वर्ष की नारी।
चेष्टा और इशारों से जो मूर्खा मति की मारी।।

अपनी चंचलता से जब षोडशी समान दिखावे।
वहाँ करुण-रस जन्म ले रहा हृदय यही बतलावे।।

*बीभत्सरस*

किया उपेक्षित पति भक्ति को लोक लाज के भय को।
कोई पतिव्रता नारी जब अपने प्रेमी नर को।।

सँवरी सजी स्नेह से भींगी देह समर्पित करती।
किसके मन में नहीं अजी! बीभत्स-भाव है भरती?।।

*भयानकरस*

गुस्से में साड़ी का आँचल देखो बाँध कमर में।
कर्कश वाणी कहे सास को वाद-विवाद समर में।।

घर का आँगन कुरुक्षेत्र हो गया अग़र बातों में।
जन्म भयानक-रस का होता क्या दिन क्या रातों में।।

*हास्यरस*

असन्तुष्ट होकर यदि नारी किसी हेतु जो पति से।
अभी चली जाऊँगी अपने आज मायके घर से।।

ऐसा कहती रोज रोज है लेकिन कभी न जाती।
वहाँ हास्य-रस की उत्पत्ति स्वतः समझ लो होती।।

*वात्सल्यरस*

भोजन अपने हाथों से स्वादिष्ठ बनाकर नारी।
नाना व्यञ्जन सजी हुई स्टील पात्र की थाली।।

अति आग्रह से पति को भोजन करने को कहती है।
वात्सल्य-रस की अनुभूति सदा वहाँ होती है।।

*शान्तरसः*

पतिगृहेण सम्बद्धा ज्ञातिसम्बन्धिनस्तथा।
किञ्चित्कालमुषित्वा च निःसरन्ति यदा गृहात्।।

तद् विलोक्य तु नारीणां मुखे यज्ज्योतिरिङ्गते।
तत्र शान्तरसस्याऽऽभा सम्यग् आलक्ष्यते बुधैः।।

*अद्भुतरसः*

मम पार्श्वे धनं नाऽस्तीत्युक्त्वा च गृहिणी यदा।
गृहस्यावश्यके कार्ये वित्तमेषा ददाति नो।।

अन्येद्युरानयत्येव सुन्दरीं नवशाटिकाम्।
तद् दृष्ट्वा हृदयेऽस्माकम् अद्भुतो जायते रसः।।

●

*शान्तरस*

सम्बन्धी ससुराल पक्ष के घर में जब आते हैं।
कुछ ही देर बैठकर घर से तुरत निकल जाते हैं।।

वहाँ तभी नारी मुख-मण्डल जो आभा है होती।
उसे शान्त-रस के प्रत्यय में मेरी वाणी कहती।।

*अद्‌भुतरस*

रुपया नहीं पास में कुछ भी गृहिणी जब है कहती।
घर के जरूरतों में धेला बिलकुल खर्च न करती।।

पर अगले ही दिन सुन्दर साड़ी खरीद लाती है।
अद्‌भुत रस की धार हमारे हृदय तभी बहती है।।

●

# अभिनवसत्यनारायणव्रतकथा-माहात्म्यम्

आसील्लीलावती काचिन्नित्यं धर्मपरायणा।
तस्या एव सुता चाऽभून्नाम तस्याः कलावती।।

एकदा धनलाभाय कलावत्याः पतिर्गृहम्।
परित्यज्य विदेशेषु यात्रार्थं प्रस्थितोऽभवत्।।

वीतेऽपि पञ्चमे मासे यदाऽसौ न न्यवर्तत।
कलावती तदा पत्युश्चिन्तायां निरताऽभवत्।।

भर्त्तुः कुशलतार्थं सा सद्यः प्रत्यागमाय च।
सत्यनारायणस्याऽथ कथां गेहे त्ववाचयत्।।

तस्याः सम्बन्धिनः सर्वे तथा च प्रतिवेशिनः।
समागताः कथायां वै श्रद्धया सोत्सुकास्तदा।।

कथायां तु समाप्तायां प्रसादस्य वितीर्णता।
यदा प्रवर्त्तते तत्र समाचारस्तदाऽऽगतः।।

विदेश-निर्मितं तावन्महार्घं वस्तु-वृन्दकम्।
संगृह्य-ट्रकयानेषु पतिस्तस्याः शनैः शनैः।।

जी० टी०-मार्गे समागच्छन् नगराभिमुखं तदा।
सीमा-शुल्कस्य च स्थाने प्राप्तुकामः प्रवर्त्तते।।

तत्समाचारमाकर्ण्य कलावत्यास्तु मानसे।
प्रियस्य दर्शनार्थं हि समुत्कण्ठा तु जागृता।।

प्रसादं सहसा तत्र त्यक्त्वा नारायणस्य सा।
सीमा शुल्कस्य च स्थाने प्रस्थिता त्वरया तदा।।

उद्दण्डतां समालक्ष्य तस्यास्तत्र तथाविधाम्।
आत्मानं भगवान् मेने नितराम् अपमानितम्।।

सद्य एव ततः केचिद् आरक्षिपुरुषास्तदा।
प्राकट्यं प्राप्तवन्तस्ते जी० टी०-मार्गस्य मध्यतः।।

तत्सर्वं वस्तु-वृन्दं वै तस्करीयं भवेन्नु किम्?।
इत्येवं कथयन्तस्ते तत्परास्तन्निरीक्षणे।।

# अभिनव सत्यनारायण व्रतकथा का माहात्म्य

धर्मकार्य में व्यस्त एक थी नारी लीलावती यहाँ।
कलावती उसकी पुत्री का नाम सिद्ध था सदा जहाँ।।

एक बार पति कलावती का घर से निकला जाने को।
यात्रा में परदेश गया वह पैसा खूब कमाने को।।

पाँच मास जब बीते फिर भी पति घर में न लौटा जब।
कलावती पति की चिन्ता में परेशान होती थी अब।।

पति के मंगल और कुशलता युक्त लौटने को लक्षित।
कथा सत्यनारायण की उसने करवाई आयोजित।।

वहाँ कथा में सब सम्बन्धी और पड़ोसी थे आए।
उत्सुक मन से श्रद्धापूर्वक कथा श्रवण सब अपनाए।।

कथा समाप्त हुई थी ज्यों ही और प्रसाद चढ़ाया था।
तभी वहाँ शुभ-समाचार का रूप सामने आया था।।

कलावती का पति विदेश में निर्मित कुछ सामानों से।
भरा हुआ ट्रक लेकर बढ़ता ,आया है अरमानों से।।

जी० टी० रोड पार करके वह शहर में घुसने वाला है।
चुंगी चौकी के बिलकुल ही पास पहुँचने वाला है।।

समाचार यह सुनकर उसके मन में उत्सुकता जागी।
पति से मिलने को आतुर वह कलावती सहसा भागी।।

छोड़ा वहीं प्रसाद कथा का मिलने को आतुरता थी।
चुंगी-चौकी निकट पहुँचकर मिलने की उत्सुकता थी।।

लेकिन श्री भगवान् सत्यनारायण थे उससे रूठे।
उद्दण्डता उपेक्षा देखी आसमान से वे टूटे।।

फलतः चमत्कार था ऐसा प्रकट हुए आरक्षी।
जी० टी० मार्ग निकट आकर वे लेने लगे तलाशी।।

ये सब माल तस्करी का क्या? कहने लगे वहाँ पर।
कैसे कहाँ जा रहा है यह? लगे पूछने जमकर।।

ट्रकयानानि सर्वाणि थानाक्षेत्रस्य पार्श्वतः।
अवरुद्धानि जातानि निगृहीतश्च तत्पतिः।।

पत्युर्निग्रहमालक्ष्य ट्रकयानेषु च स्थितान्।
सर्वानेव पदर्थांस्तान् निरुद्धांस्तु समीक्ष्य सा।।

श्रद्धया परया युक्ता तेषां मोचन-काङ्क्षया।
महाकारुण्ययुक्तेन हृदयेन कलावती।।

सत्यनारायणं तत्र भगवन्तं मुहुर्मुहुः।
ध्यायन्ती सा तदा देवं प्रार्थयामास सत्वरम्।।

तस्याः प्रार्थनया तुष्टो भगवानपि तत्क्षणम्।
सत्यनारायणो देवः प्रकटीभूय चाऽऽह ताम्।।

शृणुष्व वचनं मे त्वम् अयि! पुत्रि! कलावति!।
श्रुत्वा विधीयतां तच्च यदहं कथयामि ते।।

प्रसादं मे तिरस्कृत्य पत्युर्मिलनकाङ्क्षया।
पूजामध्ये समुत्थाय यत्त्वमत्र समागता।।

तस्मादेव समुत्पन्नं कष्टमेतद् अनीप्सितम्।
मनो दुश्चिन्तया ग्रस्तं सहसा समवर्त्तत।।

अतस्त्वं सत्वरं गत्वा गृहे तत्र पुनः स्वयम्।
अत्यन्तं भक्तिभावेन प्रसादं प्राप्नुयाः मम।।

भगवान् एवमुक्त्वा तां सत्यनारायणस्तदा।
अन्तर्हितो यदा तत्र सुस्थिताऽभूत् कलावती।।

मस्तिष्के च कलावत्या ज्ञानं किञ्चित्समागतम्।
धन्यवादं च विज्ञाप्य भगवन्तं तदा तु सा।।

गृहे सद्यः समायाता श्रद्धा-भक्तिपुरःसरा।
प्रेम्णा तस्य प्रसादं च प्रणता साऽग्रहीत्पुनः।।

प्रसाद-ग्रहणे काले सत्यनारायणस्य तु।
देवस्याऽथ प्रभावेण नष्टं कष्टं च तद् यतः।।

सारे ट्रक को वहीं पास के थाने पकड़ मँगाए।
कलावती का पति भी तत्क्षण वहीं हिरासत पाए।।

देख हिरासत में वह पति को ट्रक भी जब्त हुआ सा।
सब कुछ नष्ट हो रहा माना दिल में कष्ट बड़ा सा।।

तभी कलावती के मन में श्रद्धा अनुपम जागी।
तुरत सत्य नारायण प्रभु को ध्यान किया अनुरागी।।

ए! मेरे! भगवान् सत्यनारायण जी! मुझे बचाओ।
मुक्त करो इस कष्ट कुण्ड से दयाँ दृष्टि बरसाओ।।

श्री भगवान् सत्यनारायण ने टेर सुनी तब उसकी।
हो सन्तुष्ट प्रकट होकर वे बोले परम कृपा की।।

बेटी! कलावती! तुम सुन लो और नहीं घबराओ।
जैसा कहता हूँ तुम करना अपने कष्ट मिटाओ।।

पूजा मध्य प्रसाद छोड़कर पति से मिलने आतुर।
तिरस्कार कर मेरा तुम जो आई भाग यहाँ पर।।

इसीलिए यह कष्ट पा रही दुःख के मारे भारी।
दुश्चिन्ता से मन टूटा ज्यों हारा हुआ जुआरी।।

अतः तुरन्त अभी लौटो घर मन में श्रद्धा पालो।
ग्रहण करो पूजा-प्रसाद फिर भक्तिभाव अपना लो।।

ऐसा कहकर श्री भगवान् सत्यनारायण जी सहसा तत्क्षण।
अन्तर्धान हे गए उसका अनुभव हुआ विलक्षण।।

कलावती के मन मस्तिष्क हृदय में ज्ञान समाया।
धन्यवाद देकर तब प्रभु को श्रद्धा भाव बढ़ाया।।

तुरत वहाँ से घर पर आकर हाथ जोड़कर अपना।
श्रद्धा सहित प्रसाद लिया तब पूरा उसका सपना।।

श्री प्रभु का प्रसाद लेते ही यह प्रभाव अद्भुत था।
कष्ट हो गया नष्ट वहाँ सब काम बना उत्तम था।।

कलावत्याश्च पत्युर्वै सामञ्जस्यं स्वतस्तदा।
आरक्षिभिः समं जातं प्रदानाऽऽदानपूर्वकम्।।

सीमाशुल्काऽवरोधस्य समाप्तिः सहजाऽभवत्।
मार्ग - रोधक - वंशश्च सहसैव समुत्थितः।।

ततस्तु ट्रकयानानि यथेष्टं तानि सत्वरम्।
नाना-वस्तु-प्रपूर्णानि सम्प्राप्तान्यथ तद्गृहे।।

सत्यनारायणस्याऽथ देवस्य कृपया यथा।
कलावत्या गृहं तावत् सम्पन्नं समजायत।।

विदेश - निर्मितैस्तैस्तैर्वस्तुभिर्बहुभिर्गृहम्।
पूर्णं युष्माकमप्यस्तु भो! भो! भक्तजनास्तथा।।

कथाया अथ माहात्म्यम् एवमत्र निगद्य वै।
स्थापितं चेह तादात्म्यं भुवि नूतनया दिशा।।

जयताद् भगवान् देवः सत्यनारायणो महान्।
भवन्तु मानवाः सर्वे सदा भोगपरायणाः।।

●

कलावती के पति का तत्क्षण हुआ जुगाड़ वहाँ फिर।
पुलिस जनों के संग ले-देकर बरबस काम बना फिर।।

चुंगी का अवरोध वहाँ पर तत्क्षण खत्म हुआ था।
अवरोधक वह बाँस हटा अब ऊपर तना खड़ा था।।

सामानों से भरे हुए वे ट्रक सारे घर आए।
पूरा घर भर गया वस्तु से प्रभु को शीश नवाए।।

जैसे श्री भगवान् सत्यनारायण ने कलावती पर।
बरसायी थी कृपा वहाँ करुणा से भरी निरन्तर।।

हे भक्तों! वैसी ही तुम पर कृपा वृष्टि हो भारी।
और विदेशी सामानों से भर जाए घर बारी।।

नए रूप में नए ढंग से यह तादात्म्य नया है।
प्रभु का जो माहात्म्य बताया वह अन्दाज नया है।।

जय हो श्री भगवान् सत्यनारायण का त्रिभुवन में।
भोग वस्तु से रहे योग सब मानव सुखी भवन में।।

●

# शाकापणानां मध्ये चिकित्सकापणस्य रहस्यम्

एकदा शाकमानेतुम् आपणं गतवान् यदा।
विचित्रं तत्र दृश्यं मे चक्षुषोः पुरतस्तदा।।

आपणेष्वथ शाकानां मध्ये कश्चित् चिकित्सकः।
स्वचिकित्सापणं तावत् समुद्घाटन-तत्परः।।

शाकापणेषु दृश्यन्ते जनास्त्रि-चतुराः परम्।
आपणे तत्र वैद्यस्य त्वनेके पुरुषाः स्थिताः।।

विस्मितोऽहं ततो गत्वा पृष्टवान् तं चिकित्सकम्।
शाकापणानां मध्ये किं कारणम् आपणस्य ते?।।

मम प्रश्नं समाकर्ण्य स विहस्य चिकित्सकः।
निजाऽऽपणस्थितेस्तत्र हेतुमाह सविस्तरम्।।

पश्यैनं रोगिणं तावत् प्रथमोऽयं समागतः।
साम्प्रतं मरणासन्नः प्रतिभाति पुरः स्थितः।।

पलाण्डूनां च मूल्यं स श्रुत्वा दुर्बलमानसः।
सहसा मूर्च्छितो भूत्वा पपात धरणीतले।।

तदेतस्य चिकित्सायां व्यापारो मम वर्तते।
जलेन शीतलेनाऽस्य मूर्च्छामपनयाम्यहम्।।

रोगिणस्तु द्वितीयस्य कश्चित् पुटक-कर्त्तकः।
शाकापणे धनं सर्वं निःसार्य प्रपलायितः।।

तदेवं दुःखितश्चाऽयं पक्षाघातेन पीडितः।
साम्प्रतं शरणं प्राप्य मच्चिकित्सालये स्थितः।।

रोगिणश्च तृतीयस्य प्रवाहो रुधिरस्य वै।
शाकापणे समागत्य मूल्यमेवाऽनुवर्त्तते।।

यथा यथा हि शाकानां मूल्ये वृद्धिः प्रवर्त्तते।
रक्तचापे तदा वृद्धिरेतस्य परिलक्षिता।।

चतुर्थः पुरुषश्चाऽयं शाकानां भारहारकः।
अतिभार-वशादस्य पृष्ठाऽस्थि भुग्नतां गतम्।।

# सब्जी मण्डी में डॉक्टर की दूकान का रहस्य

एक बार सब्जी खरीदने मैं मण्डी में आया।
आँखों में मेरे समक्ष तब दृश्य अनूठा छाया।।

वहाँ सब्जियों के दुकान के बीच एक डॉक्टर भी।
अपनी डिस्पेन्सरी खोलने दीख रहा तत्पर भी।।

सब्जी मण्डी में तब तक तो तीन चार जन दीखे।
पर दुकान पर हमें अनेकों दीख रहे डॉक्टर के।।

वहाँ अचम्भे में डूबा मैं डॉक्टर से तब बोला।
क्या कारण सब्जी-मण्डी में इस दुकान को खोला?।।

मेरा प्रश्न सुना डॉक्टर ने हँसकर हमें बताया।
डिस्पेन्सरी वहाँ खुलने का यह रहस्य समझाया।।

देखो यह पहला रोगी मेरे समक्ष जो बैठा।
यह कुछ मरणासन्न दीखता हुआ देह से ऐंठा।।

लेकिन यह मन का अति दुर्बल इस सब्जी मंडी में।
सुनी प्याज की कीमत तो बेहोश गिरा धरती में।।

अब इसका इलाज करने को मेरी बारी आई।
ठंढ़े जल के छींटे से बेहोशी दूर भगाई।।

रोगी यह दूसरा यहाँ पर जो है बैठा देखो।
इसकी जेब काटकर कोई भाग गया है देखो।।

इसी दुःख से पीड़ित इसको पक्षाघात हुआ है।
वरण किया मेरी दुकान अन्यत्र इलाज कहाँ है?।।

यह देखो तीसरे व्यक्ति का रक्त-चाप बढ़ता है।
सब्जी की कीमत सुनते ही तेजी से चढ़ता है।।

जैसे जैसे सब्जी की कीमत बढ़ती जाती है।
वैसे रक्तचाप में भी इसके वृद्धि होती है।।

यह देखो यह चौथा रोगी भार यहाँ ढोता है।
अतः पीठ की हड्डी में कुछ टेढ़ापन रहता है।।

पृष्ठाङ्ग–परिचर्यार्थं साम्प्रतं स इहाऽऽपणे।
ममैव शरणं लब्ध्वा चिकित्सार्थं प्रतीक्षते।।

पञ्चमः शाकविक्रेता पुरुषोऽयं मुहुर्मुहुः।
स्वभृत्येन समं तावत् कोपाविष्टो विराजते।।

टमाटर–द्वयं भुक्तमस्य भृत्येन किं न वा?।
इत्येवं ज्ञातुकामोऽयम् "इण्डोस्कोपीं" समीहते।।

अन्यत् किमपि भुक्तं स्यात् यदि चास्योदरे गतम्।
तत्सर्वं विधिना तेन ज्ञातुकामः समागतः।।

षष्ठोऽयं पुरुषस्तावद् बहुलोभी प्रतीयते।
भुक्ता चैतेन कस्याऽपि पुष्पगोभी बुभुक्षया।।

साम्प्रतं तस्य मूल्यं च श्रुत्वा स कम्पते तथा।
यथा शीतज्वरे कश्चित् पीडितो बहु वेपते।।

ध्रुवमेष यदा चेह ज्वरग्रस्तो भविष्यति।
ममैव शरणं प्राप्य चिकित्सां कारयिष्यति।।

सप्तमो ग्राहकः कश्चित् भुशुण्डी–नलिकायुतः।
शाकापणे नरं कञ्चिन्मार्गयन् दृश्यते रुषा।।

श्रूयते चाऽस्य पुत्रस्य हस्तात्कोऽपीह साम्प्रतम्।
अपहृत्य हठात् शाकान् क्षिप्रमेव पलायितः।।

मूल्यं च तस्य शाकानां रूप्याणि षट् शतानि वै।
अपहर्त्तुर्वधार्थेऽपि मन्ये स तत्परो भवेत्।।

यदि तस्य भुशुण्डीतो गोलिका निःसरेदिह।
विवशः स्यात् चिकित्सार्थं पीडितस्तु ममाऽऽपणे।।

एवं चिकित्सकेनाऽथ वृत्तं सर्वं निरूप्य वै।
शाकापणेषु सद्भाव आत्मनः प्रतिपादितः।।

तस्य तर्कं समाकर्ण्य यदाऽहं मौनमास्थितः।
तदा सम्बोधयन् मां स पुनरूचे चिकित्सकः।।

अब मेरी दुकान पर इसका पीठ-अंग सुधरेगा।
चाहत में इलाज के मेरा इन्तजार कर लेगा।।

यह देखो पाँचवाँ व्यक्ति यह भी इलाज को आया।
अति गुस्से में डूबा है यह नौकर साथ बुलाया।।

हुआ टमाटर महँगा कितना? नौकर ने दो खाए।
यही जानने उसकी यह इण्डोस्कोपी करवाए।।

और यहाँ क्या खाया वह भी गया पेट में इसके।
इसी विधि से यह जानेगा पेट में किसके किसके?।।

देखो यह छठवाँ रोगी लालची इसे है पाया।
भूखा विवश फूल गोभी को यहाँ किसी का खाया।।

अब यह उसका मूल्य जानकर डर से हाँफ रहा है।
जैसे शीत-ज्वर में कोई रोगी काँप रहा है।।

जब चढ़ जाएगा बुखार जल्दी यह भी आएगा।
हो शरणागत वह इलाज फिर अपना करवाएगा।।

देखो यह सातवाँ व्यक्ति बन्दूक लिए फिरता है।
खोज रहा है यहाँ किसी को गुस्से में जलता है।।

सुना किसी ने इसके लड़के से सब्जी-थैला।
अभी छीनकर भाग गया है जो था मन का मैला।।

छः सौ रुपये की सब्जी जो थैले में रखता है।
उसे छीनने वाले का वह वध भी कर सकता है।।

यदि उसके बन्दूक से गोली निकल पड़े तो जानो।
वह इलाज को इस दुकान में ही आएगा मानो।।

इस प्रकार उस डॉक्टर ने अपना अस्तित्व बताया।
सब्जी-मण्डी में ही उसका है महत्त्व समझाया।।

उसकी तर्क-पूर्ण बातों को सुनकर जब मैं चुप था।
मेरी ओर मुखातिब होकर फिर उसका कहना था।।

न जाने कीदृशास्तावत् वर्त्तन्ते साम्प्रतं जनाः।
सोढुं न प्रभवन्त्येते क्षुद्रामपि महार्घताम्।।

जीवनं नैव वाञ्छन्ति पलाण्डुम् चालुकं विना।
मरणार्थम् इहाऽऽयान्ति परं शाकापणेषु ते।।

यदि शाकापणेष्वत्र तेषामागमनं ध्रुवम्।
चिकित्सकापणस्याऽपि तत्राऽपेक्षा त्तथा न किम्?।।

शाकाऽऽपणानां मध्ये च चिकित्साया ममाऽऽपणः।
युगस्य वर्त्तमानंस्य सदा विवशता मता।।

जनतायाः सुरक्षार्थं कल्याणार्थम् अतः सखे!।
आपणस्य चिकित्सायाः स्थापनं चेह सम्मतम्।।

चिकित्सक-वचः श्रुत्वा किं-कर्त्तव्य-विमूढ-धीः।
आत्मानं मूर्खमालक्ष्य गृहं प्रति निवृत्तवान्।।

●

जाने कैसे लोग आजकल जग में पड़े दिखाई।
अजी! नहीं सह सकते जो छोटी सी भी मँहगाई?।।

बिना प्याज आलू के उनका जीवन ना चल सकता।
सब्जी मंडी में ही आकर मरने को मन करता।।

यदि सब्जी-मंडी में उनका आना निश्चित जानो।
फिर मेरी दुकान की भी आवश्यकता है यह मानो।।

सब्जी मंडी में डॉक्टर की इस दुकान का होना।
वर्तमान युग की जरूरतों पर क्यों करते रोना?।।

जनता के कल्याण और रक्षा के लिए यहाँ पर।
प्यारे! मेरे मित्र! डिस्पेन्सरी की है बहुत जरूरत।।

डॉक्टर की बातों को सुनकर मैं था कुछ चकराया।
बेवकूफ समझा अपने को बुद्धू-सा घर आया।।

●

## मनुष्यरूपेण मृगाश्चरन्ति

कार्यालये नैव कदापि कार्यम्,
उत्कोच एवाऽस्ति यदीय-लक्ष्यम्।
कस्तान् वदेत् किं च वदेद् यतस्ते,
मनुष्यरूपेण मृगाश्चरन्ति।।

आतङ्ककार्येषु सदा निमग्नाः,
सिद्धाः स्वयं भारत-देश-विघ्नाः।
'जेहाद' नामानि कलङ्कयन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

भोज्येषु नानाविधमेव मिश्रम्,
कुर्वन्ति नित्यं धन-लोभिनो ये।
स्वास्थ्यं बहूनां च विनाशयन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

ये सुन्दरीं यौतक-हीन-नारीम्,
सुशिक्षतां सद्गृहिणमनिन्द्याम्।
धनेप्सवः क्रूरतया दहन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

विद्यालयाद् दूरमनुभ्रमन्तः,
छात्रान् अयोग्यानपि तारयन्तः।
सदा परीक्षास्वनुकारयन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

रोगाऽभिशप्तं विवशं मनुष्यम्,
शल्यक्रिया-मध्यगतास्तु वैद्याः।
धनाय लोके यदि संवदन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

कोलाहलं कुक्कुरवत् सदा ये,
कुर्वन्त्यहो! संसदि शोभमानाः।
गभीरचर्चां न समाश्रयन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

# मनुष्य के रूप में पशु हैं

ऑफिस में कुछ काम न करते,
घूस प्राप्ति में जो रमते।
कौन कहे? क्या कहे? इन्हें ये,
मनुज रूप में पशु होते।।

आतंकों को जन्म दे रहे,
विघ्न रूप जो भारत में।
कह 'जेहाद' कलंकित कर ये,
मनुज रूप में पशु होते।।

खाने पीने में मिलावटी,
कार्य सदा लोभी करते।
स्वास्थ्य सभी का नाश करें ये,
मनुज रूप में पशु होते।।

सुन्दर और सुशिक्षित नारी,
सद्गृहिणी जो ठीक मिली।
माँग दहेज जलाते जो वे,
मनुज रूप में पशु होते।।

नहीं पढ़ाते दूर भागते,
विद्यालय से छात्रों से।
इम्तहान में नकल कराते,
मनुज रूप में पशु होते।।

बीच ऑपरेशन जो माँगे,
विवश रोगियों से रुपये।
डॉक्टर नहीं कहाते तो ये,
मनुज रूप में पशु होते।।

श्वानों के समान संसद में,
केवल कोलाहल करते।
चर्चा कभी गभीर न करते,
मनुज रूप में पशु होते।।

विधायको नैव भवेद् विधाता,
वर्षेषु पञ्चस्वपि नैव दृष्टः।
निर्वाचने ये प्रकटीभवन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

चेतांसि पित्रोः परिपीडयन्तः,
पापानि नित्यं परिवर्धयन्तः।
स्नानेन कुम्भे यदि मोचयन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

बह्व्यस्तु भाषाः प्रथिताः पृथिव्याम्,
नाना-विध-ज्ञानमुपाश्रयन्त्यः।
दैवीं गिरां ये न परं विदन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

रामायणं नैव कदाप्यधीतम्,
न चैव गीतोपनिषत्सु रागः।
वेदस्य नामापि न ये विदन्ति,
मनुष्यरूपेण मृगाश्चरन्ति।।

●

नाम विधायक बने विधाता,
पाँच साल से दिखे नहीं।
केवल दिखे चुनाव समय वे,
मनुज रूप में पशु होते।।

मात-पिता को दुःख पहुँचाकर,
अपना पाप बढ़ाते जो।
पाप कटा कुम्भ में सोचते,
मनुज रूप में पशु होते।।

जग में नाना भाषाएँ हैं,
बहुत ज्ञान विज्ञान लिये।
पर संस्कृत जो नहीं जानते,
मनुज रूप में पशु होते।।

नहीं पढ़ी रामायण गीता,
नहीं उपनिषद् भी है देखा।
ना वेदों का नाम जानते,
मनुज रूप में पशु होते।।

## देवभाषा-पताकाः

अतिशय - रमणीयाः सत्त्वमेवाऽऽमनन्त्यः,
मुनि-जन-वरणीयाः गौरवं ख्यापयन्त्यः।
अवितथमिह राष्ट्रस्यैकतां वर्धयन्त्यः,
दिशि दिशि विजयन्तां देवभाषा-पताकाः।।

•

## देवभाषा की पताका

सात्त्विकता से पूर्ण तथा रमणीय प्रवाह निरन्तर,
ऋषि मुनियों के भद्रभाव का गौरव जिसके अन्दर।
शक्ति निहित राष्ट्रीय एकता की है जिस भाषा की,
पुण्य पताका फहराएँ हम उसी देवभाषा की।।

•

